SRI VENKATESVARA ORIENTAL SERIES No. 25

EDITOR:—Prof. P. V. RAMANUJASVAMI, M.A.

श्रीः

# प्रश्नोपनिषत्

श्रीरङ्गरामानुजमुनिविरचितम्

SRI RANGARAMANUJA'S

# PRASNOPANISHAD-BHASYA

EDITED
WITH INTRODUCTION, TRANSLATION & NOTES
BY

DR. K. C. VARADACHARI, M.A., PH.D.
*Professor and Head of the Department of Philosophy*
*Sri Venkatesvara College, Tirupati*

AND

D. T. TATACHARYA, Siromani, M.O.L.
*Assistant Editor, Sri Venkatesvara Oriental Institute, Tirupati*




TIRUPATI
PRINTED AT TIRUMALAI-TIRUPATI DEVASTHANAMS PRESS
1951

[Price Rs. 2-12-0

# विषयसूची.

श्रीः

श्रीनिवासपरब्रह्मणे नमः

श्रीरङ्गरामानुजमुनिविरचितभाष्ययुक्ता

# प्रश्नोपनिषत्

हरिः ओम् । सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी[1] च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह[2] समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

श्रीमते रामानुजाय नमः ॥

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
क्रमात् प्रश्नोपनिषदं व्याकरिष्ये यथामति ॥[3]

**सुकेशा च भारद्वाज इति** ॥ भरद्वाजस्यापत्यं पुमान्[4] भारद्वाजः । नामतःसुकेशा । शिबेरपत्यं पुमान् शैब्यः, नामतःसत्यकामः । सूर्यायणस्यापत्यं पुमान् सौर्यायणी[5], ईकारश्छान्दसः । गोत्रतो गार्ग्यः । कौसल्यो नामतः, [6]अश्वलायनस्यापत्यं आश्वलायनः । भार्गवो गोत्रतः, विदर्भस्यापत्यं वैदर्भिः । कबन्धी नामतः, कात्यायनो गोत्रतः । **ते हैते ब्रह्मपरा इति** । ते ह प्रसिद्धाः, एते उक्ताः सुकेशसत्यकामसौर्याणीकौसल्यभार्गवकबन्धिनः षडृषयः, ब्रह्मपराः वेदैकशरणा इत्यर्थः, ब्रह्मनिष्ठाः वेदार्थतात्पर्यवन्तः, यद्वा ब्रह्मपराः ब्रह्मज्ञानतत्पराः, ब्रह्मनिष्ठाः तपोनिष्ठाः, "वेदस्तत्त्वं तपो ब्रह्मे"त्युक्तेः; परं ब्रह्म परं उत्कृष्टं निरुपचरितं ब्रह्म स्वरूपतो गुणतश्च बृहद्भूतं वस्तु

1. आ. सौर्यायणीश्च । 2. ग्रन्थमुद्रितकोशवर्जमन्यत्र हकारो नास्ति । 3. इदं पद्यं आन्ध्रनागरलिखितकोशयोः पूनामुद्रिते नागरकोशे च न दृश्यते. 4. आन्ध्रलिखितकोशे 'पुमान्' इति नास्ति. 5. आ. सौर्यायणीः । पू...णिः. 6. आ. ना. आश्वलस्य ।

अन्वेषमाणाः, जिज्ञासमाना इत्यर्थः । हशब्दः प्रसिद्धौ । वैशब्दोऽवधारणे । एषः अस्मद्बुद्धौ विपरिवर्तमानः परब्रह्मवित्त्वेन प्रसिद्धः पिप्पलाद एव षण्णामस्माकं जिज्ञासितानर्थान्वक्तुं प्रभवतीति पर्यालोच्य समिद्भाराद्युपायनपाणयः शास्त्रदृष्टेन विधिना पूज्यं पिप्पलादमुपगता इत्यर्थः ॥ १ ॥

प्रश्नोपनिषद्भाष्यटिप्पणी

श्रीनिवासं परं ब्रह्म प्रणिपत्य प्रणीयते ।
रङ्गरामानुजमुनिप्रश्नभाष्यस्य टिप्पणी ॥

मूले **सुकेशा चेति** । छान्दसो नकारान्तः शब्द इति भाति । अत्र आद्येषु चतुर्षु नामसु चकारः श्रूयते । न त्वन्त्ययोर्द्वयोः । तत्र भावोऽन्वेषणीयः । सुकेशप्रभृतयश्चत्वारः एकत्र-वासादिना कारणविशेषेण प्रथमं परस्परसमागमं प्राप्य परब्रह्मान्वेषणमकुर्वन् । एषामविदितमन्यत्र क्वापि स्थितो भार्गवो वैदर्भिः स्वयमेकाकी तादृशमेव परब्रह्मावेषणं कुर्वन्नासीत् । एवं अस्याप्यविदितं क्वापि स्थितः कबन्धी कात्यायन । एतद्व्यञ्जनाय इह नामद्वये चकाराप्रयोगः । अथ कदाचित् पृथक् पृथगागतयोरनयोर्द्वयोः तेषां चतुर्णां च कथमपि मिथः समागमोऽभवत् । तदुच्यते—ते हैते इति । **सूर्यायणस्येति** । "सूर्यस्यापत्यं सौर्यः तस्यापत्यं सौर्यायणि"रित्यन्यत्र । **अश्वलायनस्येति** । आश्वलस्येति लिखितकोशपाठः । अश्वलस्यापत्यमिति भाष्यान्तरे । **वेदैकशरणा** इति । वेदेतरप्रमाणे सर्वथा आदरशून्या इत्यर्थः । एतेन तत्प्रमेयेऽप्यनादरः फलितः । वेदप्रमेये तु आदरातिशयः कण्ठत उच्यत इत्यभिप्रेत्य व्याचष्टे—**ब्रह्मनिष्ठा** इति । स्वरूपतत्परता पूर्वमुक्ता । अर्थतस्तत्परता इहोच्यत इति भावः । एवं विशेषणद्वयेऽपि ब्रह्म-शब्दस्य वेदवाचित्वं कृत्वा व्याख्याय पुनः वेदातिरिक्तविभिन्नार्थवाचित्वं कृत्वा व्याचष्टे—यद्वेति । ब्रह्म ज्ञेयतया परं प्रधानं येषां ते ब्रह्मपराः । तदाह—**ब्रह्मज्ञानेति** । एवमस्मिन् विशेषणे परतत्त्ववाची ब्रह्मशब्दः । अनन्तरविशेषणे तु तपोवाचीत्यभिप्रेत्याह—**तपोनिष्ठा** इति । एवं ब्रह्मशब्दस्यार्थत्रयमुक्तम्—वेदः परतत्त्वं तप इति । अत्र प्रमाणमाह—**वेद** इति । परपदं व्याचष्टे—**उत्कृष्टमिति** । किमर्थमुत्कृष्टत्वमिहोच्यत इत्यत्राह—**निरुपचरितमिति** । ब्रह्म-शब्दो हि उपचारेण प्रकृतौ जीवात्मनि अन्यत्र च प्रयुज्यते । तादृशौपचारिकार्थान्तरव्यावर्तनाय परत्वमुक्तमिति भावः । ब्रह्मपदं श्रीभाष्यानुसारेण विवृणोति—**स्वरूपत** इति । मुख्यान्वेषणस्य परब्रह्मणि असम्भवात् विवक्षितमर्थमाह—**जिज्ञासमाना** इति । अत्र 'ते हैते अन्वेषमाणाः एष ह वै... वक्ष्यतीति पर्यालोच्य भगवन्तं पिप्पलादमुपसन्नाः' इत्येकवाक्यता भाष्यकृतामभि-मतेति प्रतीयते । तत्र 'ते ह समित्पाणयः' इति पुनः कर्तृपदोपादानस्य कथमुपपत्तिरिति विमर्शनीयम् । 'स तपस्तप्त्वा स मिथुनमुत्पादयते' इत्यनुपदमुत्तरत्र यथा क्तान्तक्रियान्वयि-तया पृथक्कर्तृश्रवणं तथेह अन्वेषमाणा इति शानजन्तक्रियान्वयितया पृथक् श्रवणमुपपद्यत इति न एकवाक्यत्वे विरोध इति मेनिर इव । भाष्यान्तरे तु "इत्येवं तदन्वेषणं कुर्वन्तः तदधिगमाय 'एष ह वै तत्सर्वं वक्ष्यति'इत्याचार्यमुपजग्मुः । कथम् । ते ह समित्पाणयः

समिद्भारगृहीतहस्ताः सन्तो भगवन्तं पूजावन्तं पिप्पलादमाचार्यमुपसन्नाः उपजग्मुः" इति वक्ष्यतीत्यन्तमध्याहारेण वाक्यं परिसमाप्य तत्र विशेषप्रतिपादनाय प्रवृत्तं वाक्यान्तरं तेह समित्पाणय इत्यादीत्यभ्युपगतमिति प्रतीयते। अन्वेषमाणा आसन्निति प्रथमं वाक्यम्। एवं क्लिश्यमानानिमान् प्रति दयमानमनाः कश्चित् ऋषिं पिप्पलादं निर्दिश्य 'एष ह वै तत्सर्वं वक्ष्यति' इति जगादेत्यपरं वाक्यम्। तच्छ्रवणानन्तरं तेषां प्रवृत्तिप्रतिपादकमन्यद् वाक्यं 'ते ह समित्पाणय' इत्यादीत्येवमपि भवितुमर्हति। अत्र श्रुतिवचने सर्वत्र हकारः 'कर्णपरम्परया सर्वमिदं श्रुतम्। न तु साक्षाद् दृष्ट'मिति ज्ञापनद्वारा चिरप्रसिद्धिं गमयति। अन्यत्र अवधारणादिपरः। **उपसन्ना** इति। उपसेदुरित्यादिरूपेण आख्यातं न प्रयुज्यते। अपितु कृदन्तम्। अयमाशयः। आख्यातप्रयोगे, उपसदने विवक्षितो विशेषो न लभ्येत। कृत्प्रयोगे तु बभूवुरित्याख्याताध्याहारेण अवधारणप्रतीतेः 'उपसन्ना बभूवुः। न तु प्रसक्ताऽपि उपसदनस्य निवृत्तिः निष्पन्ना' इति विशेषो गम्यते। तेन च "आगतान् सुकेशप्रभृतीन् पिप्पलादो झटिति न परिजग्राह। अपि तु 'सन्ति हि बहवो ब्रह्मवित्तराः। तानुपगम्य पृच्छत। अहमज्ञः अल्पज्ञो वा। मुञ्चत माम्' इति तान् निवर्तयन्नुवाच। ते पुनः विशिष्टाचार्यालाभेन चिरानुभूतमहाक्लेशाः आप्तानां मुखात् पिप्पलादं ज्ञात्वा तस्मिन् सुदृढामाचार्यत्वप्रतिपत्तिं कृत्वा उपसृत्य 'अनन्यशरणा वयं परिग्राह्याः। दया कर्तव्या' इति दीनदीनं प्रार्थयामासुः" इत्ययमर्थो व्यज्यत इति।

**तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ[1] यथाकामं प्रश्नान् पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥**

**तान् ह स ऋषिरुवाचेति ॥** स्पष्टोर्थः। **भूय एवेति**। यद्यपि पूर्वमेव भवन्तस्तपोब्रह्मचर्यादिसंपन्नाः तथापि ब्रह्मविद्याग्रहणार्थं पुनरपि शरीरशोषणादिलक्षणतपसा, योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसङ्कल्पाध्यवसायक्रियानिर्वृत्तिलक्षणाष्टविधमैथुनवर्जनरूपब्रह्मचर्येण, आस्तिक्यबुद्धिलक्षणया श्रद्धया युक्ताः सन्तः[2] संवत्सरमात्रं वासं करिष्यथ,[3] वासं कुर्वन्त्विति यावत्। ततः स्वेच्छानुरोधेन प्रष्टव्यानर्थान् पृच्छत। यदि तानर्थान् वयं ज्ञास्यामः तदा वञ्चन[4]मन्तरेण सर्वं वक्ष्यामः। यद्यस्मासु ज्ञातृत्व[5]निश्चयाभावेन संवत्सरब्रह्मचर्यतपआदौ बहुक्लेशसाध्ये प्रवृत्तिर्न युष्मभ्यं रोचते[6] तदा सुखेन गन्तव्यमिति भावः। ततश्च गुरोः

1. आ. ना. वत्स्यथ। 2. ग्र. 'सन्तः' नास्ति। 3. पू. 'वासं करिष्यथ' नास्ति। 4. ग्र. वञ्चनाम्। 5 ग्र. ज्ञातृत्वस्येति पृथक् पदम्। 6. आ. 'रोचेत'। ना. 'रोचेत'।

ज्ञातृत्वपरीक्षामन्तरेणैव शुश्रूषा कार्येत्ययमर्थः शिक्षितो भवति। तथा गुरोरपि शिष्यसंग्रहे नातीवादरः कर्तव्य इत्यर्थश्च[1] सूचितः ॥ २ ॥

**वासं कुर्वन्त्विति**। विधीयते ह्यत्र संवत्सरवास आचार्येण। तत्र भविष्यत्त्वमात्रं न पर्याप्तमिति विधिविवक्षा कार्येति भावः। भवन्त इति कर्तृपदं विवक्षितम्। कुर्वन्त्वित्यस्य स्थाने कुरुतेति वा पठितव्यम्। **वञ्चनमन्तरेणेति**। 'सर्वं ह' इत्यत्र अभिप्रेतोऽयमर्थः। 'पृष्टान् विषयान् वक्ष्यामः' इति हि वाच्यम्। तत्र 'सर्वं' इत्युक्तिः 'यं कमप्यर्थमपरित्यज्य' इति प्रख्याप्य वञ्चनाभिसन्धिराहित्यं गमयतीति भावः।

मूले **यदि विज्ञास्याम** इति। *अत्र भाष्यान्तरम्—"अनुद्धतत्वप्रदर्शनार्थो यदिशब्दः, नाज्ञानसंशयार्थः * प्रश्ननिर्णयादवसीयते"—इति। अयमस्यार्थः। "यदि विज्ञास्यामः तर्हि वक्ष्यामः। यदि तु प्रक्ष्यमाणान् विषयान् वयं न विज्ञास्यामः संशयो वा तत्रास्माकं भविष्यति तर्हि न वक्ष्यामः" इत्ययमर्थोऽत्र न विवक्षितः। विदितवेदितव्यो हि पिप्पलादः। अत एव हि 'तान् ह स ऋषिरुवाच' इति ऋषिपदमधिकं घटयति भगवती श्रुतिः। शक्यं ह्यन्यथा तेन पदेनाप्रयुक्तेन भवितुम्। तथा च वस्तुतोऽज्ञानस्य संशयस्य वाऽत्र असम्भवात् तत्सम्भावनां प्रकाशयन्नयं यदिशब्दः वक्तुरनुद्धतत्वप्रकाशनपरः पर्यवस्यति। 'यथाकामं प्रश्नान् पृच्छत। सर्वं वो वक्ष्यामः' इत्येतावन्मात्रोक्तौ हि प्रक्ष्यमाणसर्वविषय-विज्ञानसम्पत्तिमत्ता प्रख्यापिता स्यात्। तेन चौद्धत्यमवश्यं प्रतीयेत। अतोऽनौद्धत्यप्रकाश-नायोच्यते यदि विज्ञास्याम इतीति। अत्र तु अज्ञानसंशयार्थत्वं कृत्वापि शक्यं व्याख्यानमित्यभि-प्रेत्योक्तं—**यद्यस्मास्वित्यादि**। यदि विज्ञास्यामस्तर्हि वक्ष्यामः। यदि न विज्ञास्यामस्तर्हि न वक्ष्यामः। किं कुर्याम, इत्येवार्थः। विजानतोऽपि ऋषेः कथमेवमुक्तिरिति चेत् एवं स मेने। 'सर्वं वो वक्ष्यामः' इत्येवाभिधाने 'यद्यदस्माभिः पृच्छ्येत तत्सर्वमेष जानाती'ति अस्मन्मुखात् निश्चयं ते लभेरन्। तन्मा भूत्। अस्मद्ज्ञानं प्रति अनिश्चय एव भवत्विति। किमर्थमिति चेत् गुरुत्वेन वृतस्य ज्ञातृत्वे निश्चयविरहेऽपि शिष्यैः शुश्रूषा कर्तव्येति बोधनाय। गुरुणा शिष्यसङ्ग्रहे नातीवादरः कर्तव्य इत्येतद्बोधनाय च। 'सर्वं वयं जानीमः सर्वं वो वक्ष्यामः' इत्युक्तौ हि तेषां परिग्रहे अत्यादरः प्रदर्शितः स्यात्। तत्परिहाराय "यदि विज्ञास्यामः वक्ष्यामः। क्लेशसाध्यसंवत्सरशुश्रूषानन्तरं 'इमान् प्रश्नान् नाहं जानामि' इत्ययं वक्ष्यति चेत् किं वयं कुर्यामेति भीता यदीदानीमेव गन्तुमिच्छथ गच्छत" इति प्रतिपत्तिरुद्दिष्टेति।

* 'अवसीयते। कः। यदिशब्दः। कथम्भूतोऽवसीयते। अनुद्धतत्वप्रदर्शनार्थः। कथम्भूतो नावसीयते। अज्ञानसंशयार्थो नावसीयते। कस्मात्। प्रश्ननिर्णयात्।' इत्येवमन्वयस्य सुघटितत्वात् आनन्दगिर्युक्त इतिशब्दाध्याहारोऽनपेक्षित इति ज्ञेयम्।

[1]. पू. ग्र. चकारो नास्ति।

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥**

**अथ कबन्धीति ॥** संवत्सरवासानन्तरमन्यैरनुज्ञातः कबन्धी पिप्पलादस्य मीपं यथाविध्युपगम्य पप्रच्छ। किमिति। **भगवन् कुतो ह वा** इति। स्पष्टोऽर्थः॥ ३॥

**अन्यैरनुज्ञात** इति। अर्थलब्धमिदम्। एकस्य निर्देशादितरेषां पञ्चानामप्रश्नो म्यते। ऋषिषु स्पर्धायोगात् स्पर्धया इतराननुपसृत्य अयं पप्रच्छेति न युज्यते। अतस्तैरनु- त इति वाच्यमिति। **समीपमिति**। उपेत्येत्येतत् उपनयनसंस्कारार्थगुरूपसदने प्रसिद्धम्। बन्ध्यादीनां प्रागेवोपनीतत्वादिह सोऽर्थो न सम्भवति। अतः विद्योपदेशाय आचार्यतया वृतं ति यदुपगमनं शास्त्रविहितनियमसहितं तद् विवक्षितमिति भावः।

**तस्मै स होवाच प्रजाकामो ह वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा [1]स मिथुनमुत्पादयते रयिञ्च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥**

**तस्मै स होवाचेति ॥** एवं पृष्टवते कबन्धिने पिप्पलाद उवाच–**प्रजाकामो** **वा इति ॥** अत्र प्रजापतिशब्दो ब्रह्मपरः। अस्य कारणवाक्यत्वात्। व्यासार्यैः र्वव्याख्यानाधिकरणे अत्रत्यप्रजापतिशब्दस्य ब्रह्मपरत्वस्य समर्थितत्वात्। सः सिद्धः प्रजापतिः परमात्मा प्रजासृष्टिकामनया स्रष्टव्यालोचनरूपं तपः, अतप्यत तवान्। **स तपस्तप्त्वेति**। एवं[2] स्रष्टव्यं पर्यालोच्य रयिप्राणशब्दितप्रकृतिपुरुषाख्यं मेथुनमुत्पादितवानित्यर्थः। केनाभिप्रायेणेत्यत आह–**एतौ म** इति। प्रजाकामस्य म एतौ रयिप्राणौ अनेकप्रकारान् प्राणिन उत्पादयिष्यत इत्यभिप्रायेणेत्यर्थः॥ ४॥

मूले **तस्मै स** **हे**ति। सुकेशादीनां पिप्पलादे जातां आचार्यत्वप्रतिपत्तिं ज्ञापयितुं पूर्वं भगवन्तं पिप्पलादमिति विशेषणम्। पिप्पलादस्य ब्रह्मवित्त्वप्रतिपादनाय ऋषित्ववचनमित्युक्तम्। अत्र पुनः तादृशविवक्षाविशेषविरहात् केवलतच्छब्दमात्रोपादानमिति विभाव्यम्। **ब्रह्मपर** इति। न तु चतुर्मुखपर इति भावः। कारणत्वं हि ब्रह्मणो लक्षणम्। तदिह श्रुतं ब्रह्मपरत्वं गमय- तीति। युक्त्यन्तराणि च सन्ति। विस्तरभिया न तानीह प्रतिपाद्यन्ते। तदपेक्षिभिरन्यत्र द्रष्टव्यमित्यभिप्रायेणाह–**व्यासार्यैरि**ति। **सः प्रसिद्ध** इति। 'प्रजाकामो हवै प्रजापतिरासीत्। स तपोऽतप्यत' इति यद्यपि आसीत्पदमध्याहृत्य पृथग्वाक्यतया योजनं शक्यं तथापि अध्याहार- गौरवात् 'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति न्यायाच्च एकवाक्यत्वं कृत्वा विवृतमिति

1. आ. 'स' नास्ति 2. आ. ना. 'एवं' नास्ति।

बोध्यम्। वस्तुतस्तु अत्र आख्याताश्रवणं 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इत्यनुशासनसिद्धमध्याहारं गमयति। तेन, 'प्रजाकामो ह वै' इति विधेयविशेषणस्य पश्चात्प्रयोगमुचितं परित्यज्य प्रथमं प्रयोगेन च प्रजापतिः अपरिहार्यतया प्रलयदशां प्रवर्तयन्नपि सर्वदा प्रजाकाम एव भवतीत्येवम्परमिदं पृथग्वाक्यमेव। एवम्भूततया सः प्रलयावसाने कथं प्रजाः स्रष्टव्या इत्यालोचनमकरोदित्येवम्परं स तपोऽतप्यतेति वाक्यान्तरमिति शक्यं वक्तुम्। **आलोचनरूपमिति**। तप आलोचने इति सौतो धातुः। **पुरुषाख्यमिति**। इतिशब्दलब्धमेतत्। रयिं च प्राणं चेति मिथुनमित्यन्वयात्। रयिं प्राणमिति द्वितीया प्रथमार्थे व्यत्ययेनोपपाद्या। रयिं च प्राणं चोत्पादयते, इति मिथुनमुत्पादयत इति योजना वा। **उत्पादितवानित्यर्थ इति**। उत्पादयत इति वर्तमानार्थानन्वयादिति भावः। ऋषेस्तु भवन्तीं प्रयुञ्जानस्यायमभिप्रायः। तन्मिथुनोत्पादनं भूतमपि प्रत्यक्षं वर्तमानमिव पश्यामीति। अनेन च स्वस्य तत्त्वार्थनिश्चयं सुदृढं स्थितं शिष्येभ्यः प्रकाशयति उपदिश्यमानेऽर्थे तेषां प्रत्ययदार्ढ्याय।

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्तश्चामूर्तश्च तस्मान्मूर्तिरेव रयिः॥ ५॥**

रयिप्राणशब्दार्थमाह—**आदित्यो ह वा इति**। भोग्यं आदत्त[1] इत्यादित्यः भोक्ता। स एव प्राण इत्यर्थः। [2]तस्य प्राणशब्दितत्वे हेतुःसमनन्तरमेव वक्ष्यते। "रयिरेव चन्द्रमा" इत्यस्याभिप्रेतमर्थमाह—**रयिर्वा** इति। [3]मूर्तशब्देन पृथिव्यप्तेजांसि उच्यन्ते। अमूर्तशब्देन वाय्वन्तरिक्षे उच्येते। सर्वमपि भूतजातं रयिः अन्नम्, भोग्यमित्यर्थः। तस्मान्मूर्ति[4]शब्दितं पाञ्चभौतिकं शरीरं सर्वं भोग्यमेवेत्यर्थः॥ ५॥

आदित्यपदस्य यो रूढ्यर्थः सूर्यः तस्येहासङ्गतत्वात् यौगिकं जीवमर्थमाह—**आदत्त इति**। भोग्यं वस्तु भोगार्थं गृह्णातीत्यर्थः। आदित्यपदस्यार्थमुक्त्वा वाक्यार्थमाह—**स एवेति। प्राण** इति। प्राणशब्दवाच्य इत्यर्थः। **रयिरेव चन्द्रमा** इत्यस्येति। अथास्य वाक्यस्य का योजना? सा कस्मान्न दर्शिता? उत्तरत्र चन्द्रमश्शब्दार्थविवरणस्यादर्शनात् 'चन्द्रमा इत्यस्य' इति कथमुच्यते? इति चेदुच्यते। 'चन्द्रमा एव रयिः' इत्यन्वयस्तावत् सुबोधः। रयिशब्दार्थस्य वक्तव्यत्वेन तस्योद्देश्यत्वायोगे आदित्यो ह वा इत्येतद्वाक्यवत् चन्द्रमा एव रयिरिति वचनभङ्ग्या अवश्यम्भावात्। एवं स्थिते चन्द्रमश्शब्देन किं विवक्षितमिति प्रदर्शनीयम्। तदुत्तरवाक्येन श्रुत्यैव स्फुटीक्रियत इत्यभिप्रेत्य रयिरेव चन्द्रमा इत्यस्येत्युक्तम्। 'यन्मूर्तं चामूर्तं च भूतं एतत् सर्वं रयिः' इति हि तत्रोच्यते। तत्र मूर्तामूर्तसर्वभूतजातस्योद्देश्यत्वेन निर्देशात्

1 आ. व्यतिरिक्तेषु 'भोग्यं' नास्ति। 2. पू. 'इत्यर्थः।' इत्यतः परं 'आदित्यशब्दितभोक्तृप्रतिद्वन्द्वितया भोग्यवर्गस्य चन्द्रत्वेन निर्देशः' इति दृश्यते। 3. आ. पू. 'मूर्ति'। 4. अ. पू. 'मूर्त'।

अस्मिन् वाक्ये उद्देश्यवाचिना चन्द्रमश्शब्देन तदेव भूतजातमभिप्रेतमित्येतत् स्पष्टमेव । एतेन चन्द्रमश्शब्दार्थस्योत्तरत्र विवरणं न दृश्यत इत्येतत् प्रत्युक्तम् । एवं चन्द्रमश्शब्दाभिप्रेतार्थस्य श्रुत्यैव दर्शितत्वात् तस्य शब्दस्य यो मुख्यार्थश्चन्द्रः तस्यात्र अत्यन्तं परित्याग एवेति स्पष्टम् । अत एव तत्सहपठितस्य आदित्यपदस्यापि अविवक्षितमुख्यार्थत्वप्रतीतेः योगेनामुख्यार्थपरतैव दर्शितेत्यवधेयम् । किञ्च मुख्ययोः सूर्याचन्द्रमसोर्विवक्षायां 'स मिथुनमुत्पादयते आदित्यं च चन्द्रमसं च । आदित्यो ह वै प्राणः चन्द्रमा रयिः' इत्येवंविधया वचनभङ्ग्या भाव्यमित्यपि ज्ञेयम् ।

**रयिः अन्नमिति** । रयिशब्दस्य अन्नं मुख्यार्थः । अत्र विवक्षितार्थः भोग्यमिति । नन्विद-मसङ्गतम् । रयिं च प्राणं चेत्यत्र रयिप्राणशब्दार्थः क इति जिज्ञासायां तद्ज्ञापनाय प्रवृत्तं आदित्यो वा इत्यादीति ह्यवतरणिका कृता । तदनुगुणतया मूर्तामूर्तं सर्वं भूतजातं रयिशब्दवाच्यमिति व्याख्यातव्यम् । तद्विहाय सर्वं भूतजातं भोग्यमित्युक्ते का सङ्गतिरिति चेत्—अत्रेदं बोध्यम् । चन्द्रमश्शब्दो हि भूतजाते औपचारिकः । तत्र उपचारनिमित्तं वाच्यम् । भूतजातं रयिशब्द-वाच्यमित्युक्ते कथमिति जिज्ञासा जायते । सा च परिहर्तव्या । अतः इदमुभयमुद्दिश्य रयिशब्द-वाच्यमिति व्याख्येयमपि सुज्ञानत्वादव्याख्याय रयिपदप्रतिपाद्यमर्थमेवाह अन्नं, भोग्यमित्यर्थ इति । भूतजातं भोग्यमिति प्रतिपादिते हि चन्द्रमा यथा भोग्यः तथा भूतजातमपीति सादृश्य-निमित्तक उपचार इति, भोग्यत्वादेव रयिशब्दवाच्यत्वमुपपन्नमिति च प्रदर्शितं भवति । अतो न काचिदनुपपत्तिरिति । ननु चन्द्रमा एव रयिरिति न्याय्यं क्रमं परित्यज्य कथं क्रमान्तराश्रयण-मिति चेत् मिथुनस्य अन्येन व्यवधानं न सहते श्रुतिरिति पश्यामः । तथाहि चन्द्रमसा मध्ये निविष्टेन रयिप्राणयोर्व्यवधानं स्यात् । उत्तरत्र अयनादीनां रयित्वप्राणत्वे औपचारिके । न वस्तु-तस्तत्र मिथुनभावोऽस्तीति विभाव्यम् । अथात्र अधिप्रजसंहितायां मातुः पूर्वरूपत्वात् 'रयिं च प्राणं च' इति रयेः प्रथमनिर्देश आदृतः । तदनुसारेण रयिनिरूपणे प्रथमकर्तव्ये सति किमिति 'आदित्यो ह वै प्राणः' इति प्राणस्य प्राथम्यमिति चेत् सत्यम् । तथैव रयिनिरूपणमेवात्र प्रथमं क्रियते । प्राणनिरूपणं पश्चादेव अथादित्य इति । ननु आदित्यो ह वै प्राण इति प्राणवाक्यं प्रत्यक्षं प्रथमं पठ्यते । सत्यं पठ्यते । न त्वेतदेव कृत्स्नं प्राणनिरूपणपरं प्रकरणम् । तत्रैव सङ्गतमपि अल्पमिदमेकं वाक्यमादौ पठितम् । कथम् । रयिनिरूपणाङ्गतया । औपचारिकोऽपि चन्द्रमा हि अत्र आदौ प्रस्तूयते रयिरेव चन्द्रमा इति । न च चन्द्रमस आदित्यं विना स्थितिः । तस्य तस्मिन् प्रतिष्ठितत्वात् । यथाऽऽम्नातं तैत्तिरीयब्राह्मणे "आदित्योऽसि दिवि श्रितः । चन्द्रमसः प्रतिष्ठा । चन्द्रमा अस्यादित्ये श्रितः ।" इति । तदिह चन्द्रमोनिर्देशौपयिकतया रयिप्रकरण-शेषत्वेन आदित्यवाक्यपठनम् । न तु प्राणप्रकरणोपक्रममभिसन्धायेति ।

**तस्मान्मूर्तीति** । मूर्तामूर्तभूतजातस्य रयित्वादेव तदारब्धाया मूर्तेः शरीरस्य रयित्वं भवतीत्यर्थः । यस्मात् कार्ये शरीरे रयित्वं दृश्यते तस्मात्तदुपादाने भूतजाते रयित्वमवश्यम्भावीति पूर्ववाक्योक्तार्थहेतुत्वेन पर्यवसानं द्रष्टव्यम् । तदेवं रयिप्राणशब्दार्थः क इति प्रश्नस्य भोक्ता जीवः प्राणः, भोग्यं भूतजातं रयिः इति समाधानमुक्तं भवतीति ज्ञेयम् ।

अथादित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते। यद्दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ६ ॥

**अथादित्यः**। रयिनिरूपणानन्तरं आदित्यः; वर्ण्यत इति शेषः। आदित्यशब्दितस्य भोक्तुः प्राणशब्दितत्वे हेतुरुच्यत इति यावत्। **उदयन् यत्प्राचीं दिशं प्रविशतीति**। अयं जीवः सुषुप्तिस्थानात् प्रबुद्ध्यमान एव सन् प्राचीं दक्षिणां प्रतीचीमुदीचीमधश्चोर्ध्वं च[1] अन्तरा दिशश्च सर्वं प्रकाशयन् तत्तद्दिग्वर्तीन्द्रियाणि धर्मभूतज्ञानाख्यरश्मिद्वारा बिभर्ति। तस्मात्स एव प्राण[2]शब्दितेन्द्रियनिर्वोढृत्वात् प्राण इत्यर्थः। प्राचीं दिशं प्रविशति प्रकाशयति। प्राच्यान् पदार्थानुपलभत इति यावत्। तेन तस्माद्धेतोः प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते पूर्वदिग्वर्तिपदार्थप्रकाशकान् चक्षुरादीन् प्राणान् धर्मभूतज्ञानाख्यरश्मिमुखेनाधितिष्ठति प्रेरयति। धर्मभूतज्ञानेन तदधिष्ठातृत्वलक्षणसन्निधानाभावे चक्षुरादिना करणेन रूपाद्युपलम्भो न स्यात्। चेतनानधिष्ठितस्य करणस्य कार्यासमर्थत्वादिति भावः। "यद्दक्षिणां यत् प्रतीचीं यदुदीची"मित्यादौ 'यद्दक्षिणां प्रविशति तेन दाक्षिणात्यान् प्राणान् रश्मिषु सन्निधत्ते, यत् प्रतीचीं प्रविशति तेन प्रतीच्यान् प्राणान् रश्मिषु सन्निधत्ते' इत्यादिशेषः पूरणीयः। लाघवार्थं प्रतिपर्यायं तदनुक्तिः। अत्र प्रजाः सिसृक्षुः परमात्मा प्रकृतिं पुरुषं च ससर्जेति वक्तव्ये परोक्षरूपेण रयिप्राणशब्दाभ्यां तदभिलापः रयिप्राणयोश्चन्द्रादित्यशब्दाभ्या[3]मभिलापश्च "परोक्षप्रिया इव हि देवा" इति रीत्या रहस्यार्थस्य[4] स्फुटतरोपदेशानर्हत्वसूचनार्थः ॥ ६ ॥

**वर्ण्यत इति शेष** इति। अथादित्यो वर्ण्यत इत्येकं वाक्यम्। उदयन्नित्याद्यपरम्। अत्र कर्तृवाचिनः जीवपदस्याध्याहारो वा, आदित्यपदस्यानुषङ्गो वेत्यभिसन्धिः। यद्यपि 'आदित्य उदयन् यत् प्राचीं प्रविशति' इत्येकवाक्यता स्वारसिकी भाति अध्याहारादिक्लेशाप्रसङ्गश्च, तथापि उपक्रमे अथशब्दश्रवणात् तदर्थस्यानन्तर्यस्य आख्यातोक्तप्रवेशादावन्वयस्यानुपपन्नत्वात् वाक्यभेदादि सर्वं सोढव्यमिति भावः।

**प्रकाशयतीति**। शरीरान्तः स्थितस्याणोर्जीवस्य स्वरूपतः बाह्यपदार्थप्रवेशो न सम्भवतीति ज्ञानप्रसरद्वारा स वाच्यः। ज्ञानद्वारा प्रवेशः प्रकाशनमेव। न हि तदतिरिक्तं किञ्चिदस्तीति

---

1. ग्र. पू. चकारो नास्ति। 2. ना. पू. "सर्वप्राण"। 3. आ. ना. "चन्द्रादित्याभ्याम्"। 4. ग्र. अस्यार्थस्य।

भावः । प्रकृतोपयोगितया पर्यवसन्नमर्थमाह—**उपलभत इति यावदिति** । वस्तूनां प्रकाशो हि ज्ञातुस्तद्ज्ञाने सति भवति । तादृशज्ञानवत्त्वमिह विवक्षितम् । यत् प्रविशति यज्जानातीत्यर्थ इति भावः । **तस्माद्धेतोरि**ति । ज्ञापकोऽयं हेतुरिति विभाव्यम् । **पूर्वदिगि**ति । दिक्शब्देन तद्वर्तिपदार्थलक्षणेति भावः । रश्मिषु सन्निधत्ते सम्यङ् निधत्ते । सम्यङ्निधानं नाम अभिमत-कार्यकारितयाऽवस्थापनम् । इममर्थं शास्त्रप्रसिद्धेन लोकप्रसिद्धेन च पथेन स्फुटीकरोति—**अधितिष्ठति प्रेरयती**ति । पदार्थोपलम्भेन हेतुनाऽधिष्ठातृत्वं साध्यम् । अत्र व्यतिरेकमुखीं व्याप्तिमभि-मतांप्रदर्शयति—**धर्मभूतेति** ।

मुख्ययोः सूर्याचन्द्रमसोरत्र सर्वथा प्रस्तावो नास्तीत्युक्तम् । तद् दृढीकुर्वन्नाह—**अत्रेति** । **प्रकृतिमिति** । यद्यपि मूर्तामूर्तविभागाविभक्तानि पञ्च भूतान्येव प्राक् रयिशब्दार्थतया विवृतानि तथापि तात्पर्यगत्या तेषामप्युपादानभूता मूलप्रकृतिरेव रयित्वेनाभिमतेत्यभिप्रेत्यैवमुक्तमिति ज्ञेयम् ।

**स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते ।**
**तदेतदृचाऽभ्युक्तम् ॥ ७ ॥**

"आदित्यो ह वै प्राण" इति प्राणशब्द[1]निर्दिष्टस्य भोक्तृवर्गस्योदयमानस्य परमात्मात्मकतामाह—**स एष वैश्वानरो विश्वरूप** इति । यः प्राक् प्रस्तुतः प्रजापतिशब्दितः, विश्वेषां नराणां नेतृत्वेन वैश्वानरशब्दवाच्यः, सर्वशरीरतया विश्वरूपशब्दितः, अग्रनेतृत्वादिगुणयोगेन अग्निशब्दितः, स एष प्राक् प्रजापति-शब्दनिर्दिष्टः परमात्मा "आदित्यो ह वै प्राण" इति प्राणशब्दितभोक्तृरूपःसन् उदयत इत्यर्थः । अयं च मन्त्रो वैश्वानराधिकरणे परमात्मपरतया सिद्धवत्कृत्य भगवता भाष्यकृता व्यवहृतः । अत एवं व्याख्यानमिति द्रष्टव्यम् । तदेत-दृचाभ्युक्तम्; तदेतत् ब्रह्म अभिमुखीकृत्य [2]ऋङ्मन्त्रेणोक्तम् ॥ ७ ॥

७. **परमात्मात्मकतामिति** । वैश्वानरादिपदानि परमात्मवाचीनि । प्राणपदं जीववाचि । तेषामस्य च सामानाधिकरण्येन प्रयोगः शरीरात्मभावनिबन्धन इति भावः । नन्ववान्तरप्रकरणानु-रोधेन कृत्स्नमिदं वाक्यं केवलजीवात्मपरतयैव कुतो न व्याख्यायत इत्यत्राह—**अयं च मन्त्र** इति । इदं श्रुतिवाक्यमित्यर्थः । **सिद्धवदिति** । वैश्वानरशब्दः परमात्मनि च प्रयुज्यत इति प्रदर्शनाय "परमात्मनि च 'तदात्मन्येव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्' 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत' इति च" इति श्रीभाष्ये उक्तम् । तदत्रानुसन्धेयम् । स्वतन्त्रतया जीवप्रतिपादनं 'कुतो ह वा इमाः प्रजाः प्रजायन्ते' इत्येतत्प्रश्नोत्तरप्रकरणेऽस्मिन्न सङ्गच्छेतेति भाष्यकृतामाशयः ।

---

1. प्र. पू. 'प्राणादित्यशब्दः' ।　　2. प्र. पू. मन्त्रेणाप्युक्तम् ।

अभिमुखीकृत्यैति । तदेतत् ब्रह्म ऋचा उक्तमित्येव व्याख्यातुं शक्यम् । किन्तु अभिरुप-सर्गस्तत्रानतिप्रयोजनः स्यात् । अतः 'प्रसिद्धं पूर्ववाक्योक्तं ब्रह्माभिमुखीकृत्य वक्ष्यमाणमुक्त' मिति योजना आदृतेति भावः । **ऋङ्मन्त्रेणेति** । छन्दोबद्धत्वादृङ्मन्त्रत्वम् । न त्वयं ऋग्वेदे पठितो मन्त्रः ।

**विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।**
**सहस्ररश्मिःशतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥**

**विश्वरूपं हरिणमिति** । विश्वरूपं सर्वशरीरम् । जातानि वेदांसि[1] यस्मात्स जातवेदाः । "प्रज्ञा च तस्मात् प्रसृता पुराणी"ति सर्वज्ञानोत्पादकम् । परायणं परमप्राप्यम्[2] ज्योतिः सर्वप्रकाशकदीप्तिमन्तम् एकं अद्वितीयम् तपन्तं जाठराग्न्या[3]दिरूपेण तपन्तम्, "सन्तापयति स्वं देहमापादतलमस्तकम्" "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।" इति श्रुतिस्मृतिभ्याम्; हरिणं हरिमित्यर्थः । हरिशब्दस्य नान्तत्वं छान्दसम् । वर्तमानः अनुवर्तमानः । तद्विधेयतया तच्छरीरभूत इति यावत् । सहस्ररश्मिः नानाविध-विषयविषयकज्ञानवान् । प्रजानां[4] स्थावरजङ्गमात्म(?)कानां[5], प्राणः[6] धारकः सूर्यः[7] सूर्यवत्प्रकाशः[8] एषः जीवः शतधा देवमनुष्यादिनानाविधदेहात्माभिमानशालितया सुषुप्तिस्थानादुदयते[9] । सर्गकाले उदयत इति वाऽर्थः ॥ ८ ॥

**जाठरेति** । विश्वरूपमिति प्रजासृष्टिरुक्ता । जातवेदसमिति ज्ञानप्रदानम् । परायणं ज्योतिरित्याराध्यतयाऽवस्थानम् । अतः अन्ते तपन्तमित्यनेन आराधनोपयुक्तार्थसम्पत्त्यनुगुणस्तापो विवक्षित इति ज्ञायत इति भावः । **अनुवर्तमान** इति । उपसर्गस्य द्योतकमात्रत्वात् तदभावेऽपि अपेक्षानुरोधेन केवलधातुरपि इममर्थं प्रतिपादयितुमर्हत्येवेति भावः । **नानाविधविषयेति** । आदित्यरूपमुख्यार्थस्यात्र विरहात् अतिशयोक्तिन्यायेन एवं व्याख्यातव्यं भवतीति भावः । **सुषुप्तिस्थानादिति** । 'उदयन् यत् प्राचीं दिशं प्रविशति' इति पूर्वेण ऐकरूप्यमभिसन्धायेदम् । तत्र उदयन् यत् प्रविशतीत्युदयस्य अनुवाद्यगतत्वात् 'तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते' इति सृष्ट्यनन्तरकालिकव्यापाराभिधानाच्च तथा व्याख्यानमावश्यकम् । अत्र तु तथा विशेषानव-गमात् आद्य एवोदयः स्वरसतः प्रतीयते । न च पूर्ववैरूप्यं दोषः । ऐकरूप्ये प्रमाणाभावेन तस्यैव तथात्वादित्यभिप्रेत्याह—**सर्गकाल** इति ।

---

1. म्र. "वेदांसि वेदाः" । 2. आ. ना. "परं प्राप्यम्" । 3. म्र. 'जाठरादित्यादि' । 4. आ. ना. प्राणानाम् । 5. आ. ना. स्थावरजङ्गमात्म-कानां प्राणानाम् । 6. आ. ना. नास्ति । 7. आ. ना. पू. नास्ति । 8. म्र. व्यतिरिक्तेषु 'प्रकाशकः' । 9. म्र. उदयति ।

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणश्चोत्तरश्च तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते त एव पुनरावर्तन्ते तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै[1] रयिर्यः पितृयाणः ॥ ९ ॥

एवं सूक्ष्मप्रकृतिजीवशरीरकस्य प्रजापतेः रयिप्राणशब्दितप्रकृतिपुरुषरूप-भोग्यभोक्त्रात्मना विभागमुपवर्ण्य तस्यैव परमात्मनः अखण्डकालरूपेण स्थितस्य[2] खण्ड-कालरूपेण विभागं दर्शयिष्यन्[3] चित्तावतरणाय वा उपासनार्थं वा संवत्सराख्यप्रजापतेः दक्षिणोत्तरायणात्मकं रयिप्राणरूपं विभागं, तथा मासाख्यप्रजापतेः रयिप्राणशब्दितं कृष्णशुक्लपक्षात्मकं विभागं, अहोरात्रात्मककालरूपप्रजापतेः रयिप्राणात्मकं रात्र्य-हरात्मकं विभागं, तत्प्रसंगेन रयिशब्दार्थदक्षिणायनकृष्णपक्षरात्र्यपेक्षया प्राणशब्दार्थ-भूतोत्तरायणशुक्लपक्षदिवसानां उत्कर्षञ्च वक्तुमारभते—**संवत्सरं वा इति** । तस्य[4] संवत्सराख्यकालरूपस्य[5] प्रजापतेः दक्षिणोत्तरशब्दिते अयने[6] सूर्यगत्याधारभूते द्वे रूपे स्तः । [7]तद्ये ह वा इति । ह वा इति प्रसिद्धौ स्मरणे वा । अयमर्थः । तत् [8]तत्र ये पुरुषा[9] इष्टापूर्ते दत्तमिति तत् कर्मोपासत इत्यर्थः । "य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते" इति श्रुत्यन्तरैकार्थ्यात् कृतशब्दो दत्तपरः । इष्टं यागादि श्रौतं[10], पूर्तं खातादि । इतिशब्दः प्रकारवचनः । यागदानवापीकूपादिकं कर्म येऽनुतिष्ठन्ति, ते चन्द्रम[11]स्सम्बन्धिनं लोकं अभिजयन्ते अभिजयन्ति[12] प्राप्नुवन्ति । त [13]एव पुनरावर्तन्ते । न त्वात्मोपसका उत्तरमार्गेण गता इत्यर्थः । **तस्मादेत इति** । तस्माद्धेतोरेते कर्मठाः प्रजास्वर्गादिलक्षणक्षुद्रफलकामाः ऋषयः क्षुद्रफलद्रष्टारः दक्षिणं पन्थानं पितृयाणशब्दितं प्रतिपद्यन्ते । एष एव[14] पितृयाणः रयिः अन्नप्रधानः, वैषयिकभोगात्मक इति यावत् । यद्यपि "धूमो रात्रिस्तथा कृष्ण" इत्यादिप्रमाण-

1. "इत्येष वै" । 2. आ. ना. 'अखण्डकालरूपेण स्थितस्य' नास्ति । 3. आ. ना. प्रदर्शयिष्यत् । 4. आ. पू. 'तस्य' नास्ति । ना. "तद्वत्" । 5. आ. कालरूपप्रजापतेः । 6. आ. म. पू. "द्वे अयने" । 7. आ. 'तत्' नास्ति । 8. आ. ना. पू. "तत् तत्र" नास्ति । 9. ना. 'ये पुरुषाः' नास्ति । 10. आ. पू. 'श्रौतम्' नास्ति । 11. पू. चन्द्रमसः' । 12. पू. 'अभि-जयन्ति' नास्ति । 13. आ. ना. 'अत एव' । 14. म. 'एव' नास्ति ।

प्रतिपन्नः पुराणेषु दक्षिणमार्गनिर्दिष्टो धूमादिश्चन्द्रान्तः पितृयाणोऽप्यन्यः। संवत्सरावयवभूतषण्मासात्मा दक्षिणायननिर्दिष्टोऽप्यन्यः। तथापि दक्षिणायनशब्देन द्वयोरपि व्यवह्रियमाणत्वात् कालमार्गयोरेकीकृत्य व्यवहार उपपद्यत इति द्रष्टव्यम् ॥ ९ ॥

**सूक्ष्मेति**। न हि प्रजापतिः स्वस्वरूपादेव प्रकृतिपुरुषावुत्पादयतीत्युपपद्यते। तस्याविक्रियत्वात्। अत इदं विशेषणमाक्षिप्यत इति भावः। **खण्डकालेति**। संवत्सरमासाहोरात्ररूपेण त्रेधेत्यर्थः। यद्यपि 'संवत्सरो वै प्रजापतिः तस्य त्रीणि रूपाणि संवत्सरो मासोऽहोरात्र इति' इत्येवं विभागो न दृश्यते तथापि 'संवत्सरो वै प्रजापतिः' 'मासो वै प्रजापतिः' 'अहोरात्रो वै प्रजापतिः' इति पृथक् पृथगभिधानेन अर्थतस्तथा विभाग कृतो भवतीति भावः। **चित्तावतरणायेति**। चित्तस्य प्रजापतौ, प्रजापतेर्वा चित्ते, अवतरणम्। स्फुटप्रतीतय इति तात्पर्यम्। संवत्सरः प्रजापतिरित्युक्ते श्रोता शङ्केत कथं संवत्सरः प्रजापतिरिति। तत्र, संवत्सरस्य हि द्वावंशौ स्तः दक्षिणायनमुत्तरायणं च; तत्र एको रयिः अपरः प्राण इति प्रतिपादने, रयिप्राणरूपमिथुनसम्बन्धः प्रजापतेः प्रागुक्तः। संवत्सरो यदि रयिप्राणरूपांशद्वयवान् तर्हि स प्रजापतिर्भवितुमर्हत्येवेति समाधानं कृतं भवतीति। यद्युच्येत—अयनयोर्वा कथं रयित्वप्राणत्वे। उपदेशादिति चेत् संवत्सरस्य प्रजापतित्वमपि तथैवोपदेशात् निश्शङ्कं ग्रहीष्यते। किं तत्र चित्तावतरणार्थमिति किञ्चिदभिधातव्यम्— इति तत्र तत एवास्वरसात् प्रयोजनान्तरमाह—**उपासनार्थं वेति**। आम्नानस्य हि फलं किञ्चिदवश्यं वाच्यम्। तत्र यथुक्तार्थोपपादकत्वं न सम्भवति, उपासनमगत्या प्रयोजनं वाच्यम्। सम्भवति च तत्। कार्याख्यानादपूर्वमिति न्यायादिति भावः। **तत्प्रसङ्गेनेति**। कुत इमाः प्रजाः प्रजायन्त इति प्रश्नस्योत्तरवचनप्रकरणमिदम्। तत्र प्रकृतिपुरुषरूपेण संवत्सरादिकालरूपेण च स्थितात् प्रजापतेः प्रजाः प्रजायन्त इत्युत्तरमभिप्रेतम्। अत्र अयनयोः पक्षयोः दिवाकालरात्रिकालयोश्च मिथ उत्कर्षापकर्षप्रतिपादनस्य नास्त्युपयोगः। अतः साक्षात्सङ्गत्यभावात् प्रसङ्गसङ्गतिरेव वाच्येत्यभिसन्धिः। **आधारेति**। अधिकरणे ल्युडिति भावः। **स्मरणे वेति**। उक्तप्रसङ्गसङ्गत्यनुगुणमिदमर्थान्तरमिति बोध्यम्। **अयमर्थ** इति। श्रोतृणामवधानसम्पादनाय व्याख्यानप्रतिज्ञेयम्। इदं त्यक्तुं शक्यम्; पाठान्तरेण वा भवितव्यमिति भाति। उपरि उपासत इत्यर्थ इत्यत्रत्योऽर्थशब्दो वा त्यक्तव्यः। तदिति लुप्तसप्तमीकमव्ययमित्यभिप्रेत्याह—**तत् तत्रेति**। कृतमित्यस्य वक्ष्यमाणप्रकारेण विवक्षितमर्थमाह—**दत्तमिति**। द्वितीयतच्छब्दस्य इतीशब्दानन्तरं स्थानमित्यभिप्रेत्याह—**इति तदिति**। तं व्याचष्टे—**कर्मेति**। इष्टं पूर्तमिति विशेषोपादानं तच्छब्दार्थजिज्ञासायां सामान्यमाक्षिपतीति भावः। उक्तेऽर्थे उपपत्तिं दर्शयन् स्पष्टतरं विवृणोति—**य इम** इत्यादिना। आत्मनेपदं छान्दसमित्यभिप्रेत्य न्याय्यं रूपं दर्शयति—**अभिजयन्तीति**। क्रियाफलस्य भोगस्य कर्त्रभिप्रायतां गमयितुं व्यत्ययेनापि श्रुतिरात्मनेपदं परिगृह्णातीति ज्ञेयम्। चान्द्रमसमेवेत्येवकारः आदित्यलोकव्यावृत्तिपरः। स्पष्टत्वादिदं नोक्तम्। एवकारार्थं विवृणोति—**नत्विति**। **तस्माद्धेतोरिति**। यस्मात् चन्द्रमसं गत्वा पुनरावर्तन्ते तस्मादित्यर्थः। चन्द्रलोकप्रापकत्वपुनरावृत्तिमत्त्वे हि दक्षिणमार्गस्य लक्षणभूते। तादृशी चन्द्रलोकप्राप्तिः पुनरावृत्तिश्च यस्मादेतेषां विद्येते

तस्मादेते दक्षिणमार्गगामिन इति भावः। **एते कर्मठा** इति। एत इत्यङ्गुल्या निर्देशात् सामान्याधिकारित्वं ततोऽनुत्कर्षश्च प्रतीयते। तद् कर्मठा इत्यनेन स्फुटीकृतम्। नन्वीदृशानां कथमृषित्वमित्याशङ्क्य अविरोधेन तद्व्याचष्टे—क्षुद्रेति। अतीन्द्रियार्थदर्शित्वादव्याहतमृषित्वम्। परन्तु कृच्छ्रलब्धां तां शक्तिं बत क्षुद्रफलवर्गमात्रे विनियुञ्जत इति स्वकीयं शोकमाविष्करोति श्रुतिरिति भावः। 'ऋषित्वयोग्याः' इत्यपि शक्यं व्याख्यातुम्। तथात्वे योग्या अपि तथा न भवन्ति क्षुद्रफलसङ्गादिति शोकाविष्कारः।

**पन्थानमिति**। यद्यपि दक्षिणमित्येतावन्मात्रं मूले श्रूयते तत्र चोपक्रमानुसारेण अयनमित्येव विशेष्यं योजनीयं तथापि प्रसिद्धस्य संवत्सरावयवभूतस्य दक्षिणायनस्येहानन्वयात् 'स एतं देवयानं पन्थानम्' इत्यादिश्रुतिप्रयोगप्रसिद्धं विवक्षितार्थान्तरप्रत्यभिज्ञापकमिदं विशेष्यमुपात्तमिति ज्ञेयम्। अर्थान्तरं ज्ञापयितुमुक्तं पितृयाणशब्दितमिति। एवं संवत्सरप्रजापतेर्विभाग उक्तः। तत्र दक्षिणायनसम्बन्धि प्रासङ्गिकं चोक्तम्। अथास्य रयित्वमुच्यते—**एष वा** इति। अत्र 'यः पितृयाणः एष रयिः' इति श्रूयमाणपदयोजना। तत्र एतच्छब्दः पितृयाणपरामर्शीति स्पष्टम्। परन्तु पूर्वं दक्षिणं प्रतिपद्यन्त इति दक्षिणमार्गः प्रस्तुतः। अद्य पितृयाणस्य रयित्वे उच्यमाने पूर्वेण सह अस्य का सङ्गतिरिति शङ्का जायते। तत्र यः प्रस्तुतो दक्षिणमार्गः स एव पितृयाण इत्युच्यते नान्य इति ज्ञापनीयम्। ज्ञापितं चैतत् पूर्वमेव 'दक्षिणं पन्थानं पितृयाणशब्दित' मित्यनेन। तदिह पर्यवसितगत्या वक्तव्यमर्थं पूर्वोक्तपरामर्शिना एतच्छब्देन लभ्यमानमिव कृत्वा आह—**एष** एव **पितृयाण** इति। तस्य कथं रयित्वमित्युपपादनाय विवृणोति—**अन्ने**त्यादिना। सूचितमर्थं स्फुटीकर्तुं दक्षिणायनपितृयाणयोर्वैलक्षण्यप्रतिपादनपूर्वकं शङ्कते—**यद्यपीति**। तथा च दक्षिणायनकालं प्रस्तुत्य, इष्टापूर्तकारिणः पितृयाणेन चन्द्रमसं प्राप्नुवन्तीत्युक्ते का सङ्गतिरिति भावः। समाधत्ते—**तथापीति**। अयं भावः। दक्षिणायनशब्देन द्वयोरपि व्यवहारोऽस्ति कालस्य च मार्गस्य च। एवमुत्तरायणशब्देनापीति द्रष्टव्यम्। तत्र संवत्सरानुगुणतया कालस्य प्रजापत्यनुगुणतया मार्गस्य च प्रतीतिर्भवति। एकशब्दोपादानेन तु उभयोरभेदः प्रतीयते। तत्र रूपकाद्यलङ्कारेष्विव एकस्य प्रकृतत्वं अपरस्योपरञ्जकत्वमात्रं, न प्रकृतोपयोगः। तत्रास्य प्रजापतिप्रकरणत्वात् तत्सम्बन्धी मार्ग एव प्रकृतो ग्राह्यः न कालः। तथा च पितृयाणदेवयानमार्गावेव दक्षिणायनोत्तरायणरूपतया इह विवक्षिताविति।

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते। एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः। तदेषः श्लोकः॥ १०॥**

**अथोत्तरेणेति**। अथशब्दो वाक्यान्तरोपक्रमे। ये तावत् "किं प्रजया करिष्याम" इति विरक्ता ऋषयः कायक्लेशादिलक्षणेन तपसा, स्त्रीसंगराहित्यलक्षणेन

ब्रह्मचर्येण, आस्तिक्यबुद्धिलक्षणया श्रद्धया, प्रत्यगात्मविद्यया, परमात्मानमुपास्य, अर्चिरादिना उत्तरेणायनेन[1] "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवःस एनान् ब्रह्म गमयती" त्युक्तप्रकारेण ब्रह्मप्राप्तिद्वारभूतमादित्यं अभिजयन्ते प्राप्नुवन्तीत्यर्थः। अन्वेष्टव्यतया निर्दिष्टमात्मानं स्तुवन् तेषामपुनरावृत्तिं दर्शयति—**एतद्वै प्राणानामिति।** आयतनशब्दापेक्षया एतदिति नपुंसकलिङ्गनिर्देशः। प्राणानां प्राणभृतां[2] आयतनं आधारभूतम्। "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः। प्रज्ञामात्राः प्राणे अर्पिता" इति परमात्मनः सकलचेतनाधारत्वोक्तेः। एतत् परायणं परमप्राप्यमित्यर्थः। **एतस्मान्न पुनरावर्तन्ते।** उपासका इति शेषः। उत्तरेण मार्गेण गताः "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत" इत्युक्तरीत्या परमात्मानं प्राप्य न निवर्तन्त इत्यर्थः। **एष निरोधः।** एषः "प्रजाकामो वै प्रजापति"रिति प्राक् प्रजापतिशब्दनिर्दिष्टः परमात्मा स्वं प्राप्तस्य पुनरावृत्तिनिरोधकारी। अतस्तं परमात्मानं प्रजापतिशब्दितं प्राप्तस्य तदुपासकस्य अपुनरावृत्तिरुपपद्यत इति भावः। अत्र एष इत्येतच्छब्देन प्रजापतिपरामर्शात् आत्मानमन्विष्येत्यात्मशब्दोऽपि प्रजापतिपर एव। अत एव[3] एतत्सर्वमभिप्रेत्य सर्वव्याख्यानाधिकरणे व्यासार्यैः "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते एतस्मान्न पुनरावर्तन्ते" इति अर्चिरादिगत्या अपुनरावृत्तिप्रतिपादनात् "प्रजाकामो वै प्रजापति"रिति प्रजापतिशब्दनिर्दिष्टः परं ब्रह्मेति प्रतिपादितमिति द्रष्टव्यम्। ततश्च प्रजापतिमुपासीनस्यार्चिरादिगत्यप्रतिपादनात् कथं प्रजापतेर्ब्रह्मत्वमिति शङ्का निराकृता[4]। **तदेष श्लोकः** तत् तस्मिन् संवत्सरात्मनि[5] प्रजापतौ वक्ष्यमाणः श्लोक इत्यर्थः॥ १०॥

१०. **वाक्यान्तरेति।** उत्कृष्टोत्तरायणप्रतिपादनपरवाक्येत्यभिसन्धिः।

अभिजयन्ते; के? न तद्वाचकं पदमुपात्तम्। कोऽभिप्रायः। तेऽतीव दुर्लभा इति। भूयिष्ठतया सुलभत्वे हि 'इमे' इति निर्देशः क्रियेत। उत्तरमार्गनिष्ठास्तु अत्यन्तं विरलाः अत्यन्तं दुर्लभाः। किञ्च 'इमे' इति निर्देशोऽप्यस्माकं तान्प्रलपचाराय कल्पेतेति बिभेति श्रुतिः।

1. प्र. 'अर्चिराद्युत्तरायणेन'। 2. आ. 'प्राणभूतानाम्' 3. प्र. 'एव' नास्ति। 4. प्र. पू. इदं वाक्यं नास्ति। 5. आ. "संवत्सराख्य"।

एवं च विशिष्यानिर्दिश्यमानतयैव एषमुत्तरमार्गाधिकारिणां दक्षिणमार्गाधिकारिभ्योऽतिमात्रवैलक्षण्यं व्यञ्जितं भवति। तत् स्फुटीकरोति—**ये तावदिति**। ते हि प्रजाकामा विषयसङ्गिनः। एते तु 'किं प्रजया करिष्यामः' इत्येवं स्थिता विरक्ता इति। **कायक्लेशेति**। विहितमुपवासादिकमित्यर्थः। तपसेति विहितानुष्ठानं, ब्रह्मचर्येणेति निषिद्धवर्जनं, श्रद्धयेत्यधिकारसम्पत्तिः, विद्ययेति अङ्गभूतं स्वात्मोपासनं चाभिप्रेतमिति भावः। **उपास्येति**। नष्टवस्तूपलम्भाय प्रवृत्तो हि यावदुपलम्भं तद् वस्तु सादरं बुद्धौ धारयति। तदिहान्वेषणेन उपासनं लक्ष्यत इति भावः। उत्तरेणेत्यस्य विशेष्यं अयनं महाप्रकरणाल्लभ्यते। तच्च मार्गरूपमिति पूर्वोक्तरीत्या स्थितम्। तदाह—**अर्चिरादीति**। उत्तरेणेत्यादितृतीयान्तशब्दमालायां प्रथमवर्जमन्ये अन्विष्येत्यत्र ल्यबन्ते अन्वीयन्ते। प्रथमस्तु अभिजयन्त इत्यस्मिन्नाख्याते। अतोऽत्र प्रथमपठितस्यापि चरमं व्याख्यानमिति ज्ञेयम्। पाठप्राथम्यं तु अथेत्युपक्रम्यमाणस्यावान्तरप्रकरणस्य एतदीयतया प्राधान्यादिति। ननु यद्युत्तरमार्गेण आदित्यं प्राप्नुवन्ति तावता चन्द्रप्राप्तिहेतुभूतान्मार्गान्तरादस्य को विशेष इत्याशङ्कापरिहाराय सप्रमाणं विशिनष्टि—**आदित्याच्चन्द्रमसमिति**। स्वप्राप्यं, तस्य ह्यन्वेषणं भवति। तेनात्मनः प्राप्यत्वे सिद्धे 'अन्विष्य आदित्यमभिजयन्ते' इत्यादित्यप्राप्तिः किमर्थमुच्यत इति पर्यालोचनायां तत्प्राप्तिद्वारतयेति प्रतीयते। तच्चान्यत्र स्पष्टमेवोक्तमिति भावः। नन्वादित्यस्य ब्रह्मप्राप्तिद्वारत्वं काममस्तु। ततोऽपि को विशेष इति शङ्कापरिहाराय एतद्वै प्राणानामित्यादिप्रवृत्तिरित्यभिप्रायेणावतारयति—**अन्वेष्टव्यतयेति**। **स्तुवन्निति**। प्रकृतोपयोगितया कांश्चन गुणान् कीर्तयन्नित्यर्थः। गुणाभिधानं हि स्तोत्रम्। एवं चास्य वाक्यस्य आत्मस्वरूपनिरूपणे न तत्परता। अपि तु अपुनरावृत्तिप्रतिपादने, तेन पुनरावृत्तिमतो दक्षिणमार्गादस्योत्तरमार्गस्य विशेषप्रतिपादने चेति द्रष्टव्यमिति भावः। **नपुंसकेति**। अन्यथा आत्मपरामर्शितया पुल्लिङ्गता स्यादिति भावः। **आधारभूतमिति**। आत्मतया धारकमित्यर्थः। अमृतं निरतिशयभोग्यम्। अभयं दुःखासम्भिन्नम्। स्वर्गसुखवत् नश्वरत्वकृतभयशून्यमिति यावत्। **परमप्राप्यमिति**। ततोऽन्यत् प्राप्यं नास्तीत्यर्थः। **एतस्मादिति**। पुनरावृत्तिर्हि तस्याभोग्यत्वाद्वा नश्वरत्वाद्वा प्राप्यान्तरसत्त्वाद्वा शङ्क्येत। तत् त्रितयमपि नास्ति। एतस्य सर्वात्मत्वात्। तस्मादपुनरावृत्तिरिति। **उपासका** इति। कर्त्रपेक्षायां पूर्वमन्विष्येत्यनेनोपस्थिता अन्वेषणकर्तार एवान्वेतुमर्हन्तीति भावः।

**एष** इति। इतिशब्दः पूर्वेणान्वितः उत्तरमार्गस्य वैलक्षण्यप्रतिपादनसमाप्तिद्योतक इत्याशयः। **प्रागिति**। उक्तरीत्या इतिशब्देनावान्तरप्रकरणस्य समाप्तत्वावगमात् ततः परं श्रूयमाणोऽयमेतच्छब्दः परमप्रकृतं प्रजापतिं परामृशतीति भावः। **स्वप्राप्यस्येति**। दक्षिणायनेन गच्छन्तः तं न प्राप्नुवन्ति। तस्मात् तेषां पुनरावृत्तिनिरोधी न भवतीति भावः। **निरोधकारीति**। कर्तरि घञिति भावः। कारणान्तरेण पुनरावृत्तिप्रसङ्गविरहेऽपि परमात्मनः स्वतन्त्रत्वेन स कदाचित् पुनरावृत्तिसङ्कल्पं यदि कुर्यात् तर्हि किं कर्तव्यमिति शङ्कापरिहारायायं वाक्यशेषः। 'ज्ञानी त्वात्मैव मे मतम्' 'स च मम प्रियः' 'तेषु चाप्यहम्' इति वदतस्तस्य तादृशसङ्कल्पकरणे कः प्रसङ्ग इति विवक्षितमित्याशयः। एवमत्र प्रतिपादितस्य अपुनरावृत्ति

हेतुत्वस्य परमात्मलिङ्गत्वात्, तदधीनमिद्धिकमर्थविशेषमाह—**अत्र एष इतीति । आत्मशब्दोऽपीति** । न ह्यनुपासकस्य स्वेतरोपासकस्य वा प्रजापतिः पुनरावृत्तिनिरोधकारी भवेत् । तेनायमुपास्य आत्मा प्रजापतिरेवेति । इदमत्र आकूतम् । कारणतया प्रतिपाद्यमानत्वात् प्रजाकामो ह वै प्रजापतिरिति निर्दिष्टः प्रजापतिः परमात्मेति पूर्वमेवोक्तम् । तस्यैवेह पुनः आत्मशब्देन एतच्छब्देन च निर्दिष्टस्य उपास्यत्वार्चिरादिगतिप्राप्यत्वापुनरावृत्तिहेतुत्वप्रतिपादनादपि तस्य परमात्मत्वं वेदितव्यमिति । तदिदं संवादार्थं श्रुतप्रकाशिकोदाहरणव्याजेन स्फुटीकरोति—**अत एवेति** ।

**संवत्सरात्मनीति** । नन्वितिशब्देनावान्तरप्रकरणावसानं सूचितम् । एष निरोध इत्येतच्छब्देन च प्रजाकामो ह वै प्रजापतिरिति निर्दिष्टः परमप्रकृतः प्रजापतिः परामृश्यत इत्युक्तम् । तथा सति कथमिदानीं अयमेतच्छब्दः संवत्सरात्मानं प्रजापतिं निर्देष्टुं शक्नोति । व्यवहितत्वात् । इति चेदुच्यते । इतिशब्देन उत्तरमार्गवैलक्षण्यप्रतिपादनसमाप्तिर्द्योत्यत इत्युक्तम्; न तु प्रकरणसमाप्तिरिति । एतच्छब्देन च संवत्सरो वै प्रजापतिरित्यत्रोपस्थित एव प्रजापतिः परमृश्यते । स तु परामृश्यमानः केवल एव परामृश्यते न संवत्सरात्मत्वविशिष्टतया । अस्य आकारस्य पुनरावृत्तिनिरोधकरणे अनुपयोगित्वात् । कारणत्वाकारस्यैवापेक्षितत्वात । एतद्व्यञ्जनायैव 'एषः प्रजाकामो वै प्रजापतिः इति प्राक् प्रजापतिशब्दनिर्दिष्टः' इति विवरणं कृतम्, न तु तद्वाक्योपस्थितपरामर्शित्वतात्पर्येण । तस्मात् मध्ये निरोधवाक्ये अनाकांक्षितत्वेन संवत्सरात्मत्वविशेषणपरित्यागेऽपि अत्र विशिष्टपरामर्शे नानुपपत्तिलेशोऽपीति ।

एतस्मान्न पुनरार्तन्त इति हेतोः एष उत्तरमार्गः निरोधशब्दवाच्यो भवति पुनरावृत्तिं निरुणद्धीति व्युत्पत्तेः । न च दक्षिणमार्ग एवमित्येवमपि शक्यं व्याख्यातुमिति द्रष्टव्यम् ।

**वक्ष्यमाण इति** । एष श्लोक इत्यत्रत्यस्य एतच्छब्दस्य विवरणमिदम् । बह्वृचैरधीत इति पूरणीयम् ।

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।**
**अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥**

**पञ्चपादं पित्तरमिति** ॥ वत्सरसंवत्सर[1]परिवत्सरेडावत्सरानुवत्सररूपाः पञ्च पादाः यस्य स पञ्चपादः । अथ वा हेमन्तशिशिरयोरेकीकरणात् षडृतवः पञ्चर्तवः संपद्यन्ते । ते पादाः यस्य स पञ्चपादः[2]तम् । पितरं सर्वस्य जनकं, द्वादशाकृतिं द्वादशमासाकृतिं, दिवः स्वर्गात् परे परस्मिन् अर्धे स्थाने पुरीषिणं पुरीषशब्देन स्वर्णभूमिसन्निहितं ब्रह्माण्डगोळकावरणमुच्यते । सोऽस्य स्थानत्वेनास्तीति पुरीषिणमाहुरित्यन्वयः । अथशब्दः पक्षान्तरपरिग्रहे । उशब्दः अवधारणे । परशब्द

1. ना. "संवत्सरवत्सर..."। 2. ग्र. 'पञ्चपादः' नास्ति ।

उत्कृष्टवचनः । पूर्वोक्तेभ्योऽन्ये उत्कृष्टाः, इमे कालतत्त्वविदः आदित्यादिग्रहसप्तकलक्षणचक्रयुक्ते, ऋतुलक्षणारषट्कयुक्ते, संवत्सराख्ये रथे जगत्सर्वं विचक्षणं कुशलं निश्चलं यथा भवति तथा अर्पितमित्याहुः ॥ ११ ॥

'प्रभवो विभवः शुक्लः' इति पठिते षष्टिहायनचक्रे प्रथमे पञ्च क्रमेण वत्सरादिनामानः । पुनः षष्ठादयः पञ्च तथा । पुनरपि एकादशादयः पञ्च तथैवाने द्रष्टव्यम् । एवं पञ्चाब्दीक्रमेण संवत्सरचक्रस्य परिवर्तमानत्वात् पञ्चपादत्वमुक्तमित्यभिप्रेत्य व्याचष्टे—**वत्सरेति** । तैत्तिरीयब्राह्मणे एकत्र 'संवत्सरः, परिवत्सरः, इदावत्सरः, इदुवत्सरः, इद्वत्सरः' इति पञ्च नामानि दृश्यन्ते । अपरत्र चतुर्थस्येदुवत्सरस्य स्थाने अनुवत्सरः पठित इति विशेषः । एकैकस्य हायनस्य पञ्चपादत्वं वक्तव्यमिति यदि मन्येत तदनुरोधेनान्यथा व्याचष्टे— **अथवेति** । **पञ्चर्तव** इति । 'द्वादश मासाः पञ्चर्तवः' इति वेदेष्वेवाम्नातमिहानुसन्धेयम् । ऋतुप्रवृत्तिक्रमेण हि संवत्सरो याति । तेन ऋतूनां पादत्वम् । **स्वर्णभूमीति** । 'तदण्डमभवद्धैमं' 'तदण्डमकरोत् द्विधा' 'ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे' इति मनूक्तरीत्या हिरण्मयस्याण्डस्य शकलेन दिवो निर्मितत्वात् विश्वकोशस्योपरितनी भूमिः स्वर्णमयी भवति । तस्या अप्युपरि यदावरणमास्ति तत्पुरीषपदवाच्यमिति ।

**उत्कृष्टेति** । एभिर्यदुच्यते तदेवोपादेयमिति भावः । संवत्सरात्मनः प्रजापतेः स्थानोपदेशपरोऽयं मन्त्रः पक्षद्वयमुपन्यस्य चरमे सिद्धान्ततामभिव्यञ्जयति । तत्र प्रथमः पक्षः, दिवः परे स्थाने वर्तत इति कण्ठोक्तः । दूरे स्थितस्य कथं संवत्सररूपकालनियन्तृत्वमिति शङ्कायां 'प्रदीपवदावेशस्तथाहि दर्शयति' इत्यभावाधिकरणसूत्रोक्तन्यायेन सङ्कल्पमात्रेण तदुपपन्नमिति समाधानाभिप्रायेण पञ्चपादं द्वादशाकृतिमिति शरीररूपणं कृतम् । अण्डान्तर्वर्त्यपि समस्तं वस्तुजातं व्याप्य वर्तमानत्वादिहैव स परमात्मा वर्तत इति द्वितीयः पक्षः । स तु परमरहस्यत्वान्न कण्ठत उच्यते । अपि तु 'सप्तचक्रे' 'षडरे' इति रथरूपणेन व्यज्यते । न ह्यधिष्ठातारं रथिनं विना रथस्य प्रवृत्तिरस्ति । तथा इहैव स्थितः संवत्सररथं नियमयतीत्ययमेव पक्ष आदरणीय इति ।

**जगत्सर्वमिति** । अर्पितमिति पारतन्त्र्यप्रतीतेर्न परमात्मनो विशेष्यतया ग्रहणं युज्यते । अतः पारिशेष्यात् जगदेव ग्राह्यमिति भावः ।

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः[1] प्राणस्तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥**

'यथा संवत्सरो रयिप्राणात्मना विभक्तः, एवं मासोऽपि' इत्युपासनार्थं प्रदर्शयति—**मासो वै प्रजापतिरिति** । स्पष्टोऽर्थः । **तस्मादेत इति** । यस्मात् शुक्लः

1. आ. "शुक्लः पक्षः" ।

पक्षः[1] प्राणतया उत्कृष्टः तस्मात् ऋषयः अतीन्द्रियार्थद्रष्टारः सर्वेऽपि शुक्लपक्ष एव शोभनानि कर्माणि कुर्वन्ति । इतरे अनृषयः अज्ञाः पुनः अप्राणतया असारभूते कृष्णपक्षे कुर्वन्तीत्यर्थः ॥ १२ ॥

**रयिप्राणात्मनेति** । यद्यपि 'एष ह वै रयिर्यः पितृयाणः' इतिवत् 'एष ह वै प्राणो यो देवयानः' इति उत्तरमार्गस्य प्राणत्वं नोक्तं तथापि 'एतद्वै प्रजानामायतन'मित्यनुक्त्वा 'एतद्वै प्राणानामायतनम् एतस्मान्न पुनरावर्तन्ते' इति प्राणपदघटनात् प्राणभृतां परमश्रेयःप्राप्तिसाधनतया उत्तरायणस्य प्राणत्वमौपचारिकं सूचितमेवेति नानुपपत्तिरिति ज्ञेयम् । **उपासनार्थ**मिति । एतेन पूर्वोक्ते चित्तावतरणार्थत्वे नातीवादर इति व्यज्यते । मूले तस्मादित्यस्य शुक्लपक्षस्य प्राणत्वादित्यर्थः । अस्तु प्राणत्वम् । तावता तत्र कथमनुष्ठानमित्यतः सोपस्कारं व्याचष्टे—**यस्मात्**—**उत्कृष्ट** इति । प्राज्ञानामनुष्ठानकालतया उत्कर्षः सूचित इति भावः ।

**अनृषय इति** । नन्वेतदनुपपन्नम् । पूर्वं 'एत ऋषयः' इति श्रवणात् । यदि हि 'ऋषयः शुक्ले कुर्वन्तीतर इतरस्मिन्' इत्येतावन्मात्रं श्रूयेत तर्हि 'इतरे ऋषिभिन्ना अनृषयः' इति विवरणं युज्येत । एत ऋषय इत्येवमभिधाय अनन्तरं इतर इति निर्देशात्तु अन्ये ऋषय इत्येव स्वरसतः प्रतीयते । अतस्तथैव व्याख्येयमिति चेत् । अत्रेदमवधेयम् । 'एत ऋषयः शुक्ले कुर्वन्ति ; इतरे ऋषयः कृष्णे कुर्वन्ति' इति वचनव्यक्तौ अङ्गीक्रियमाणायां कस्यचिद्विशेषस्यानवगमात् वाक्यमेव कृत्स्नं व्यर्थं भवति । न हि उभयोरपि पक्षयोः समं प्राशस्त्यं प्रतिपाद्यत इति युक्तमङ्गीकर्तुम् । पूर्वापरप्रक्रियाविरोधात् । मासस्य प्रजापतित्वकथनस्य पक्षयोर्विभज्यवचनस्य चात्यन्तवैयर्थ्यापातात् । उपासनमात्रार्थत्ववादस्यातिदुर्बलत्वात् । तस्मात् 'एते केचन शुक्ले कुर्वन्ति । इतरे सर्वे कृष्णे कुर्वन्ति' इत्येव वचनव्यक्तिः । अत्र हेतुरपेक्ष्यते कस्मादेवं केचन शुक्ले कुर्वन्ति नेतरस्मिन् इति । तत्प्रतिपादनपरमेतत् 'ऋषय' इति । यस्मादेत ऋषयः प्राज्ञाः विशिष्टकालावगमकुशलाः तस्मादेते विशिष्टे शुक्लपक्षे कुर्वन्तीति । एतेन, अनृषित्वादेव इतरे इतरस्मिन् पक्षे कुर्वन्तीति तत्रापि हेतुराक्षिप्तो भवति । तथाच इतरेऽनृषय इत्येव पर्यवसानमित्यतिसूक्ष्मदर्शिताऽत्र भाष्यकारस्य निपुणं विभाव्या । 'अनृषयः अज्ञाः' इति पुनर्विवरणेन हि स्पष्टमत्र स्वाभिप्रायं प्रकाशयतीति ।

**अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥**

अमुमेव विभागं अहोरात्रेऽप्युपासनाय प्रदर्शयति—**अहोरात्रो वै प्रजापतिरिति** । स्पष्टोऽर्थः । **प्राणं वा एत** इति । यस्माद्धेतोरह्नः प्राणरूपत्वं,

1. पू. "पक्षः" नास्ति ।

अत एव रत्या रत्यर्थं, प्रयोजनस्य हेतुत्वविवक्षया[1] तृतीया । प्राणभूतेऽह्नि स्त्रीभिर्ये संयुज्यन्ते त एते प्राणमेव प्रस्कन्दन्ति प्रकर्षेण शोषयन्ति[2] । प्राणापचारात् प्राणमेव निघ्नन्तीत्यर्थः । ननु तर्हि स्वयोषिद्गमनं गृहस्थैर्न कार्यमित्याशंक्य रात्रौ कार्यमित्याह—**ब्रह्मचर्यमेव तदिति** । रत्यर्थं रात्रौ स्त्रीसंप्रयोगो ब्रह्मचर्यमेव । मैथुनमेव न भवतीत्यर्थः । तन्न दोषायेति यावत् ॥ १३ ॥

**तन्न दोषायेति** । ननु गृहस्थधर्मस्य स्वयोषिद्गमनस्य दोषत्वापादकतया प्राणरूपस्याह्नोऽपकर्षः, अतथाभूततया रयिरूपाया रात्रेरुत्कर्षश्च प्रतीयते । न चैवमेवास्तु को दोष इति वाच्यम् । 'प्राणशब्दार्थभूतोत्तरायणशुक्लपक्षदिवसानामुत्कर्षं च वक्तुमारभते' इति पूर्वोक्तविरोधादिति चेन्न । यथा दम्पत्योः स्वच्छन्दवृत्तिर्गुरुसन्निधौ निषिध्यते तथेह अहनि संसर्गनिषेध इत्यभिप्रायात् । गुरूणां पूज्यत्वं हि तत्र निबन्धनम् । तथा प्राणरूपस्याह्नोऽपीति ।

**अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥**

ननु प्रकृतिपुरुषकालात्मकं ब्रह्म कथं प्रजानामुपादानमित्युच्यते । अन्नपरिणामभूतस्य रेतस एव प्रजोपादानत्वदर्शनादित्याशंक्याह—**अन्नं वै प्रजापतिरिति** । अन्नावस्थं, तदुत्पन्नरेतोऽवस्थञ्च यतः प्रजापतिशब्दितं ब्रह्मैव, अतः प्रकृतिपुरुषसंवत्सरमासादिकालान्नरेतोऽवस्थात्[3] ब्रह्मणः सर्वाः[4] प्रजाः प्रजायन्त इति प्रजापतिशब्दितस्य ब्रह्मण उपादनत्वमुपपद्यत इति भावः ॥ १४ ॥

**उपादानमित्युच्यत इति** । न चात्र पूर्वमुपादानत्वं कुत्रोक्तमिति वाच्यम् । उत्पादिते मिथुने एकस्य प्राणस्य विश्वरूपं हरिणमित्यनेन मन्त्रेण प्रजापत्यात्मकत्वोक्त्या तत एव तत्साहपठिताया रयेरपि तत्सिध्द्या च कार्ययो रयिप्राणयोरन्तरात्मतयाऽवस्थानेन प्रजापतेरपि कार्यत्वं तावत् प्रतीयते । न चेदं तस्योपादानत्वमन्तरेणोपपद्यत इति तदपि प्रतीतमेवेति ।

**इत्याशङ्क्येति** । इति श्रोतुराशङ्कां उत्थितां कृत्वेत्यर्थः । यद्वा इत्येवं चोद्यमाशङ्क्येति योज्यम् । अन्नावस्थमिति । आभ्यां शङ्कापरिहाराभ्यामस्य प्रश्नस्य सारार्थः प्रकाशितः । तथा हि—कुतो ह वा इमाः प्रजा प्रजायन्त इति पृच्छतः कबन्धिनः कात्यायनस्यायमभिप्रायः । स्त्रीपुंसाभ्यां मिथुनीभवद्भ्यां प्रजा जायन्त इति प्रत्यक्षमेतत् । प्रत्यक्षाद्यगोचरात् परस्माद् ब्रह्मणः सर्वमुत्पद्यत इति तु वृद्धा आचक्षते । अत्र किं तत्त्वमिति जिज्ञासामह इति । परं ब्रह्म

1. आ. '**विवक्षायाम्**' । 2. पू. **शोचयन्ति** । 3. आ. **व्यतिरिक्तेषु** "**अवस्थारूपात्**" । 4. आ. '**इमाः**' ।

प्रकृतिपुरुषौ सृष्ट्वा तदात्मतयाऽवतिष्ठते । संवत्सरादिकालरूपेण वर्तमानः तत्तदृत्वनुगुणवर्षातपादिप्रवर्तनेन अन्नमुत्पाद्य तदात्मतयाऽवतिष्ठते । अन्नं जग्ध्वा तृप्तः पुमान् यदा स्त्रिया संयुज्यते तदा वीर्यात्मना स्थितं ब्रह्म तस्या गर्भं प्रविश्य ततःपरं काले प्रजारूपो जायते। तस्मात् ब्रह्मणः प्रजा जायन्ते, अन्नाज्जायन्ते, मातापितृभ्यां जायन्ते, रेतसो जायन्त इत्येषां व्यवहाराणां न मिथो व्याघात इत्याचार्यस्य इयता विस्तरेणोत्तरं ददतोऽभिप्राय इति ।

**तद्ये ह तत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको[1] येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥**

**तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥**

## इति प्रथमः प्रश्नः ॥

प्रसंगात्[2] अमुमुक्षुनिन्दापूर्वकं मुमुक्षून् स्तौति—**तद्ये ह वै(?) प्रजापति**[3]**व्रतं चरन्तीति** । तस्माद्ये "अन्नं वै प्रजापति"रिति प्रजापतिशब्दितस्यान्नस्य व्रतं भक्षणं व्रतत्वेनानुतिष्ठन्ति येऽन्नभक्षणशीला ब्रह्मचर्यरहिताः, त एव प्रजा उत्पादयन्ते । एष ब्रह्मलोकः[4] पुत्रपश्वादिलक्षणः कार्यभूतब्रह्मरूपः[5] लोकः तेषामेव, न त्वात्मकामानामिति भावः । **येषां तपो ब्रह्मचर्यमिति** । येषां कायशोषणाख्यं[6] तपः न भक्षणशीलता, मैथुनवर्जनं; येषु च "मनस्यन्यद् वचस्यन्यत् कर्मण्यन्यद् दुरात्मना"मित्युक्तकौटिल्यलक्षणं जिह्मत्वं नास्ति, भूताहितवचनलक्षणमसत्यवचनं[7] नास्ति तेषामसौ विरजः निर्दोषः ब्रह्मैव लोको ब्रह्मलोकः[8] । तथैव व्यासार्यैःसर्वव्याख्यानाधिकरणे विवृतत्वादिति द्रष्टव्यम् । इति शब्दः प्रतिवचनसमाप्तौ ॥ १५-१६ ॥

## इति प्रथमप्रश्नभाष्यम् ।

१५. प्रसङ्गादिति । कुत इमाः प्रजाः प्रजायन्त इति प्रश्नस्य तस्मादिमाः प्रजाः प्रजायन्त इत्यन्तमुत्तरं दत्तम् । तत्र प्रकरणं समापनीयम् । केषां ब्रह्मलोकप्राप्तिर्भवति केषां न भवतीति प्रतिपादनस्य नास्ति सङ्गतिरित्याशङ्कापरिहारायेदमुक्तम् । यद्यपि नान्या सङ्गतिरस्ति तथापि प्रसङ्गरूपायास्तस्याः सत्त्वात् न असङ्गतत्वशङ्का कार्या । कारणभूते हि ब्रह्मणि उपदिष्टे तत्प्राप्ति-

1. आ. ना. पू. एष लोकः । 2. प्र. पू. 'तत्प्रसङ्गात्' 3. आ. "प्रजापतेर्व्रतम्" । 4. आ. ना. पू. "एष लोकः" । 5. आ. ना. "कार्य ...रूपः" नास्ति । 6. आ. "... शोषाख्यम्" । 7. प्र. "भूताहितमसत्य ..." 8. प्र. इतः परं 'परब्रह्मरूपं फलमित्यर्थः' इत्यधिकं दृश्यते ।

कामानां मुमुक्षूणां तत्रोदासीनानामितरेषां चोपस्थितिर्भवति। तस्मात् तत्स्तुतिनिन्दे क्रियेते इति भावः। ये प्रजापतिव्रतं चरन्तीत्यादिना अमुमुक्षुप्रत्यायनम्। तेषामेष ब्रह्मलोक इति तेषां संसारचक्रपरिवर्त्यमानतया निन्दा। येषां तपो ब्रह्मचर्यं येषु सत्यं, न येषु जिह्ममिति मुमुक्षुख्यापनम्। तेषामसौ विरजो ब्रह्मलोक इति तेषां सर्वदुःखनिवृत्तिपूर्वकमहानन्दप्राप्त्यर्हतया स्तुतिरिति विभाव्यम्।

अथ प्रासङ्गिकमपि निष्प्रयोजनं न वक्तव्यम्। असङ्गतत्वापरिहारात्। न ह्युपस्थितिमात्रं प्रसङ्गः। अपि तु उपेक्षानर्हत्वमपि मिलितम्। तच्च प्रतिपादनस्य प्रयोजनवत्त्वे सति भवति नान्यथा। तथा चामुमुक्षुमुमुक्षुनिन्दास्तुत्योरिह किञ्चित्प्रयोजनं वाच्यमिति चेद् ब्रूमः प्रश्नस्योत्तरं यद्यपि दत्तं तथापि 'एतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त' इति पूर्वोक्तं स्मरतां इयमाशङ्का भवितुमर्हति—सर्वा एव प्रजाः अमृतमभयं परायणमात्मानमन्विष्य अपुनरावृत्तिं कुतो न गच्छन्ति। कुत इह प्रजायन्त इति; एतत्परिहारव्यञ्जनतात्पर्येण इमे स्तुतिनिन्दे प्रवृत्ते। जिह्मानृतमायारहितानां हि तपआदिसम्पत्त्या विद्यानिष्पत्तिः, ततोऽपुनरावृत्तिश्च। तथाविधा अतिदुर्लभाः। स्वभावतः सर्वेषां जिह्मानृतादिसङ्गित्वात्। तदिह पुनःपुनर्जायन्ते। नापुनरावृत्तिपदं गच्छन्तीति।

प्रथमतच्छब्दं लुप्तपञ्चमीकमव्ययं कृत्वा व्याचष्टे—**तस्मादिति**। यस्मादन्नं रेतस्त्वेन परिणमते रेतसश्च प्रजा जायन्ते तस्मादित्यर्थः। द्वितीयतच्छब्देन प्रसिद्धिपरामर्शकेन जडैराचर्यमाणमित्येतदभिधीयत इति सुगमम्। व्रतत्वेन नियतकर्तव्यत्वेन। व्रतशब्दस्य 'पयोव्रतं ब्राह्मणस्य' इत्यादौ भक्षणार्थे प्रसिद्धत्वात् अन्नस्य प्रजापतित्वेन पूर्ववाक्ये उपस्थितत्वाच्च एवमिदं भाष्यकृता व्याख्यातम्। यदि तु इतिशब्देन प्रधानप्रकरणसमाप्तिद्योतकेन अन्नोपस्थितिर्विच्छिन्नेति स्यात् तदा प्रकारान्तरेण व्याख्यातुं शक्यम्। तथाहि। अत्र प्रजापतिव्रतं नाम किमिति पर्यालोचने 'ते मिथुनमुत्पादयन्ते' इत्येतत्सादृश्यात् 'स मिथुनमुत्पादयते' इत्येतद्वाक्यघटित 'प्रजाकामो ह वै प्रजापति' रित्यादिप्रतिवचनारम्भस्थमहावाक्योपस्थित्या प्रजाकामनया तत्स्रष्टृयुचितप्रयत्नवत्त्वं प्रजापतेर्यत् तदुक्तं तदेवेह प्रजापतिव्रतपदविवक्षितमिति प्रतीयते। तदयमर्थः। तत् तत्र; वस्तुतत्त्वे एवं स्थित इत्यर्थः। ये तत् पूर्वोक्तं प्रजापतिव्रतं प्रजाकामनया तदुत्पादनोपयोगिनं तीव्रमुद्यमं चरन्ति कुर्वन्तीति।

**एष ब्रह्मलोक** इति। क्वचिद् ब्रह्मपदं न पठ्यते। पठ्यमानं तु युक्तं भाति। यद्यप्युक्तरीत्या सर्वं ब्रह्मात्मकमेव तथापि अल्पत्वास्थिरत्वादिदोषभूयिष्ठतया नेदं विवेकिनामभिलाषास्पदमिति भावः। **येषां तप** इति। यद्यपि अस्मिन् खण्डे इदं पठ्यते तथाप्यर्थानुसारेण उत्तरत्र योजनमावश्यकमिति भावः। **जिह्मत्वमिति**। उत्कटं जिह्मत्वमेव मायेत्यभिप्रेत्य न मायापदं व्याख्यातमिति भाति। ग्रन्थपातो वा। **विरज इति**। छान्दसमकारान्तत्वम्। उपधादीर्घाभावो वा। ननु ब्रह्मणो लोको ब्रह्मलोक इति स्वरसतः प्रतीयत इत्यत्राह—**तथैवेति**। उपपत्तिराकरग्रन्थेषु द्रष्टव्येति भावः। **इतिशब्द इति**। प्रतिवचनमहाप्रकरणसमाप्तिद्योतक इत्यर्थः।

इति प्रथमप्रश्नटिप्पणी

## अथ द्वितीयः प्रश्नः ॥

**अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजां[1] विधारयन्ते कतर एतत् प्रकाशयन्ते कः पुनरेषां वरिष्ठ[2] इति ॥ १ ॥**

देहेन्द्रियमनःप्राणादिविलक्षणप्रत्यगात्मशोधनाय प्रश्नानवतारयति । उक्तञ्च व्यासार्यैः "उत्तरेषु खण्डेषु प्रत्यगात्मा विशोध्यत" इति । **अथ हैनमिति** । कबन्धिप्रश्नानन्तरं पिप्पलादं भार्गवो वैदर्भिः पृष्टवान् । किमिति? भगवन्निति । हे भगवन् किंसंख्याका देवाः स्थावरजङ्गमात्मिकां प्रजां[3] बिभ्रति । तेष्वेव[4] देवेषु कतरे देवा एतत् शरीरं तत्कार्यं(वा) प्रकाशयन्ते । कः पुनरेषां श्रेष्ठ इति ॥ १ ॥

### अथ द्वितीयः प्रश्नः

महाप्रकरणार्थमाह—**देहेन्द्रियेति**। प्रजानामुत्पत्तिरुक्ता, स्वरूपं निरूप्यत इति सङ्गतिरिति भावः । प्रजाशब्दः प्रायो मनुष्यार्थे प्रयुज्यते । इह न तथेत्यभिप्रेत्याह—**स्थावरेति** । कतर इत्यनेन 'न ते सर्वे अपि तु तेषु केचिदेव, इति ज्ञायते' इति प्रष्टा सूच्यते । तद्विशदयन्नाह—**तेष्वेवेति** । एतदिति प्रत्यक्षनिर्देश इत्यभिप्रेत्य विवृणोति— **शरीरं तत्कार्यं वेति** । कार्यं आहारविहारादि । शरीरस्य प्रकाशनं यदि निष्पादनं न तद् वागादिकर्तृकम् । यद्यभिव्यञ्जनं न तदाकाशादीनाम् । यद्युज्ज्वलीकरणं न तत्प्रायेण भूयिष्ठानाम् । अतः तत्परित्यज्य तत्कार्यानुधावनम् । प्रकाशनं च निष्पादनमेव । यद्यत्र एतदिति पूर्वोक्तपरामर्शि तर्हि, 'प्रजाविधारणमेव तदर्थं कृत्वा तेषु कतरे देवाः स्वकृतं प्रजाविधारणं प्रकाशयन्ते अस्मद्वेद्यं कुर्वन्ति ; कैः कृतं तत् अस्माभिः स्फुटं द्रष्टुं शक्यमिति यावत् ।' इति शक्यं विवरीतुम् । **कः पुनरिति** । यद्यपि धारणादिकृतो बहवः तथापि तेषु एकेन श्रेष्ठेन भवितव्यम्; स क इति ।

**तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुःश्रोत्रञ्च । ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥**

**तस्मै स होवाच** । स्पष्टोऽर्थः । मुख्यप्राणस्यैव धारकत्वप्रकाशकत्वश्रेष्ठत्वानि[5] वक्तुमाख्यायिकामाह—**आकाशो ह वा** इति । ह वा इति प्रसिद्धद्योति-

---

1. आ. ना. 'प्रजानाम्' 2. पू. 'बलिष्ठः' । 3. आ. 'त्मिकाः प्रजाः' । 4. आ. ना. पू. 'एष्वेव' । 5. ना. 'धारकत्वश्रेष्ठत्वादीनि' ।

शये । एषः प्रसिद्धः आकाशः, दीव्यति देवः गमनशीलः तादृशो वायुश्च, अग्निरापः पृथिवी । स्पष्टोऽर्थः[1] । वाक्छब्देन कर्मेन्द्रियाणि सर्वाणि [2]उपलक्ष्यन्ते । चक्षुःश्रोत्र-शब्देन ज्ञानेन्द्रियाणि । **ते प्रकाश्याभिवदन्तीति** । आकाशादयः सर्वे मिलित्वा[3] पुरोवर्ति शरीरं प्रदर्श्य अभितः स्थित्वा वदन्ति स्म । किमिति? वयं बाणवत् सञ्चार-शीलं एतत् पुरोवर्ति शरीरमवलम्ब्य विधारयामः । अवकाशादिविविधकार्यक्षमतया धारयाम इत्यर्थः ॥ २ ॥

आख्यायिकां कथाम् । **प्रसिद्ध्यतिशय** इति । 'एष ह वै आकाशः' इत्यन्वयं कृत्वा भूतेषु पञ्चमत्वेन लोके 'तस्माद्वा एतस्मादात्मन आकाशः' इति सृष्टिप्रकरणेषु प्रथमत्वेन वेदे चात्यन्तं प्रसिद्ध आकाश इत्यर्थो वाच्य इति भावः । गमनशीलः । देवो वायुरिति वायुमात्र-विशेषणताप्रतीत्या तदसाधारणधर्मपरो देवशब्द इति । **वायुश्चेति** । श्रोत्रं चेति अन्ते श्रुतश्च-शब्दः सर्वसमुच्चायक इति ज्ञापनाय इह योजित इति ज्ञेयम् । **कर्मेन्द्रियाणीति** । शरीरारम्भ-काणि पञ्चभूतान्युक्तानि । अथ तदाश्रितानि द्विविधानि इन्द्रियाण्युच्यन्ते । तत्र कर्मेन्द्रियेषु वाचः प्राधान्यम् । मनुष्यासाधारणत्वात् । परोपदेशसाधनत्वाच्च । तस्मात्तया इतरेषामुपलक्षणम् । अन्तरिन्द्रियत्वेन वैलक्षण्यात् सर्वज्ञानसाधनत्वाच्च ज्ञानेन्द्रियेषु मनसः प्राधान्यम् । तस्मात् तस्य कण्ठतो निर्देशः । बाह्यज्ञानेन्द्रियेषु चक्षुषः प्राधान्यं प्रसिद्धम् । अलौकिकार्थप्रमापकश्रुतिग्रहण-साधनतया श्रोत्रस्यापि तत्तुल्यं प्राधान्यमिष्यते । तस्मादनयोरुभयोरुपादानमित्याकूतम् । **ते प्रका-श्येति** । ननु नपुंसकमनपुंसकेनेत्यनुशासनात् तानीति नपुंसकलिङ्गेन भाव्यम् । न पुंलिङ्गेनेति चेन्न । ते देवा इति विवक्षितत्वात् । अथैवं सति 'एषः प्रजां विधारयन् एतत्प्रकाशकः देवः आकाशः । वायुश्च । अग्निश्च' इत्येवं पृथग्वाक्यतया व्याख्याय 'कत्येव देवाः प्रजां विधारयन्ते' 'कतर एतत्प्रकाशयन्ते' इति प्रश्नद्वयस्य 'आकाशादय एतावन्तो देवाः प्रजां विधारयन्ते' इत्युत्तरमुक्तं भवतीति व्याख्यातुं शक्यत्वे औचित्ये च सति किमिति तच्छब्दपरामर्शोपयोगितया आकाशो ह वा इत्यादिना पदार्थनिर्देशमात्रमिति व्याख्यातमिति चेत् सावधानं श्रोतव्यम् । कत्येव देवा इत्यवधारणार्थः प्रश्नः । तत्र आकाशो ह वा इत्यादि न प्रतिवचनं भवितुमर्हति । एतेषामेव धारकत्वाभावात् । मा मोहमापद्यथाहमेवैतद्बाणमवष्टभ्य विधारयामीति प्राणधारकत्वस्य वक्ष्यमाण-त्वात् । तस्मात् आद्ययोः प्रश्नयोर्यथायथं प्रतिवचनमर्थलभ्यमेवेति कृत्वा एवं व्याख्यातमिति ।

**मिलित्वेति** । ते वदन्तीत्येकपदोपादानाल्लब्धमिदम् । **पुरोवर्तीति** । प्रकाश्येत्यस्य कर्मापेक्षायां वाक्योपात्तक्रियान्तरकर्मैव इहाप्यन्वेतीति भावः । प्रकाश्येत्यस्य अत्र सङ्गतमर्थ-माह—**प्रदर्श्येति** । निर्दिश्येत्यर्थः । **अभितः स्थित्वेति** । उपसर्गार्थस्य सर्वपार्श्वसम्बन्धित्वस्य वदनक्रियायां साक्षादसम्भवात् स्थितिक्रियाद्वाराऽन्वयो वाच्य इति भावः । **बाणवदिति** । बाण-

1. अ. 'स्पष्टोऽर्थः' नास्ति । 2. आ. ना. 'सर्वकर्मेन्द्रियाणि' । 3. पू. 'मिलिताः'

शब्दस्य पुल्लिङ्गत्वात् एतदिति लिङ्गभेददोषः । एष चासौ बाणश्च एतद्बाणः तमित्येकपदत्वं श्रुतिशैलीविरुद्धम् । क्वाप्येवमदर्शनात् । अतः एतदिति विशेष्यवाचकं कृत्वा बाणशब्दो विशेषणतया योजितः । शरीरपरत्वात् सर्वनाम्नः क्लीबता । नियतलिङ्गत्वाद्बाणशब्दः पुमानेवेति न कश्चिद्दोष इति । इदमागच्छतीत्यादाविव क्रियाविशेषणतयाऽपि शक्यं योजनमिति द्रष्टव्यम् । **अवलम्ब्येति** । स्वरूपं यथा न विशीर्यते तथा रक्षणमवष्टम्भः । कार्यकरणावसरे यथा नावसादः तथा रक्षणं धारणमिति भावः । वीत्युपसर्गार्थमाह— **बकाशेति** । आकाशकार्यमिदम् । आदिना तत्तद्भूतेन्द्रियकार्यभेदोऽनुसन्धेयः ।

**तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यै[1] तद्बाणमवष्टभ्य विधारयामीति ॥ ३ ॥**

**तान्वरिष्ठः प्राण उवाच**— मुख्यः प्राण उवाचेत्यर्थः । किमिति? मा मोहमापद्यथेति । हे आकाशादयः, ईदृशीं विपरीतबुद्धिं मा गच्छत । अहमेव स्वात्मानं प्राणापानव्यानसमानोदानरूपेण पञ्चधा विभज्य धारयामीति । एवं वदतो मुख्यप्राणस्यायं भावः । हे आकाशादयः, भवन्तः अवकाशादिप्रातिस्विककार्यक्षमाः । न तु सर्वकार्यक्षमाः[2] । अहन्तु भवतामपि कार्यनिमित्तत्वात् भवत्कार्यक्षमः, मया क्रियमाणे जीवने तु भवत्सु न कोऽपि क्षम[3] इति ॥ ३ ॥

कः पुनरेषां वरिष्ठ इति पृष्टवतः शिष्यस्य अयं वरिष्ठ इत्यज्ञातत्वात् तं प्रति वरिष्ठः प्राण इति ज्ञातवत् कथमुच्यत इत्याशङ्क्य विवृणोति—**मुख्यः प्राण** इति । पूर्वमन्येषां निर्दिष्टत्वात् परिशेषेण मुख्यं प्राणमिह विवक्षितं गृहीत्वा तस्य वरिष्ठत्वेन निर्देशात् अयमेव वरिष्ठ इति स्वप्रश्नसमाधानमपि शिष्यः प्रतिपत्स्यत इत्याचार्यो मन्यत इति भावः । **आपद्यथेति** । पद्यतेः परस्मैपदं लङ्स्थाने लट्र च व्यत्ययेनेति बोध्यम् । **प्रातिस्विककार्येति** । तत्तदसाधारणैकैककार्येत्यर्थः । **भवत्कार्येति** । 'अहमेव एतद्बाणमवष्टभ्य विधारयामी'ति तेषामेवोक्तेरनूक्तत्वात् तेषां कार्यं स्वायत्तमिति सूचितम् । पञ्चधाऽऽत्मानं विभज्येत्यनेन अन्यसम्बन्धरहितं स्वैकसाध्यं कार्यमभिहितम् । तदाह—**मया क्रियमाण** इत्यादिना ।

**तेऽश्रद्दधाना बभूवुः । सोऽभिमानादूर्ध्वमुत्क्रमत[4] इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते[5] तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्का-**

1. आ. ना. पू. 'विभज्य' । 2. ग्र. आ. नत्वित्यादि नास्ति । 3. आ. ना. पू. 'समर्थः' । 4. ग्र. 'उत्क्रामते' 5. ग्र. यू. 'उत्क्रामन्ते' ।

**मन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्त एवं वाङ्मनश्चक्षुःश्रोत्रं च । ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥**

तेऽश्रद्धाना इति । ते तद्वाक्ये विश्वासं न कृतवन्तः । ततः स प्राणः एषां गर्वमवलोक्य अहंकारावेशात् अष्टोत्तरशतमर्मस्थानानामुपरि स्वसामर्थ्यं प्रकटयितुं स्वस्थानात् किञ्चिदुदचलत्[1] । इवशब्दः अल्पार्थे । साक्षादुत्क्रमणे अप्रतिसमाधेयशरीरविनाशः स्यादिति मत्वा उत्क्रमणमिव कृतवानिति भावः । तस्मिन् मुख्यप्राणे उत्क्रामति इतरे सर्वे प्राणा उदक्रामन् । तस्मिंस्तु प्रतिष्ठमाने सर्वे एव प्रतिष्ठन्ते । शरीरपातभीत्या पुनः प्रतिष्ठां प्राप्नुवति सति इतरेऽपि प्रतिष्ठिता इत्यर्थः । तत्र दृष्टान्तमाह—**तद्यथेति** । यथा मधुकरमक्षिकाः तत्र श्रेष्ठां मक्षिकामुत्क्रामतीमनूत्क्रामन्ति, प्रतिष्ठितायां तस्यां स्वयं प्रतिष्ठिता भवन्ति, एवं वागाद्याः प्राणा मुख्यप्राणानुविधायिनो भवन्तीत्यर्थः[2] । **ते प्रीता इति** । मुख्यप्राणमाहात्म्यदर्शनप्रीता वागाद्याः प्राणा मुख्यप्राणं तुष्टुवुरित्यर्थः । स्तौतेर्व्यत्ययात् श्नुः ॥ ४ ॥

मूले '**तेऽश्रद्धधाना**' इति । मुख्यप्राणेन भर्त्सिता आकाशादयः पञ्च तथेति प्रतिपद्य तूष्णीं बभूवुः । वागादयस्तु स्वस्यापि प्राणसमाख्यत्वेन मुख्यप्राणतुल्यत्वाभिमानद्रढिम्ना तत्प्राधान्ये अश्रद्धधानाः स्पर्धां कुर्वन्त एवासन्निति वागादिमात्रपरामर्शित्वमिह तच्छब्दस्य बोध्यम् । अत एवोत्तरत्र एषामेव ग्रहणं नाकाशादीनाम् । **उदक्रामन्निति** । वर्तमानार्थस्यानन्वयात् व्यत्ययेन लङर्थः कल्पनीय इति भावः । अद्याप्येवैव स्थितिरिति व्यञ्जनाय तु श्रुतिर्लटमाश्रयतीति बोध्यम् । प्रातिष्ठन्ते 'प्र आ इत्युपसर्गद्वयपूर्वकात्तिष्ठतेरात्मनेपदम् । **तुष्टुवुरिति** । पूर्ववद्व्यत्यय इति भावः । अद्यापि नूनं स्तुवन्तः सन्तीति व्यञ्जनाय लट् ।

**एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः । एष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत् ॥ ५ ॥**

स्तुतिमेवाह— **एषोऽग्निस्तपतीति** । एषः मुख्यप्राणः अग्निरूपेण तपति । एषः प्राण एव सूर्यः । सर्वेषां प्राणायत्तस्थितिकत्वात् । "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इति रीतिमनुसृत्य सामानाधिकरण्यपदेशो द्रष्टव्यः[3] । रयिर्देवः

---

1. प्र. 'उदचलदिव'. 2. पू. '**अभवन्नित्यर्थः**' 3. प्र. '**द्रष्टव्यः**' नास्ति । पू. '**दृष्टः**' । ना. **सामानाधिकरण्येन दृष्टः** ।

अन्नभूतो देवः[1] । चन्द्रमा इति यावत् । सदसच्छब्दौ वर्तमानावर्तमानपरौ, प्रत्यक्षाप्रत्यक्षपरौ वा, स्थूलसूक्ष्मपरौ वा, चेतनाचेतनपरौ वा । अमृतशब्दो मोक्षपरः । तस्यापि तदधीनत्वादिति भावः ॥ ५ ॥

५. **स्तुतिमेवाहेति** । प्रश्नावसानपर्यन्तसर्वमन्त्रावतारिकेयम् । **एषोऽग्निरिति** । अग्निः पृथिवीदेवता । स प्राण एव । सूर्यो द्युदेवता । स एव वृष्टिप्रवर्तकतया पर्जन्य इति मघवानिति च प्रथते । सोऽपि प्राण एव । वायुरन्तरिक्षदेवता । सोऽपि प्राणः । एवं स्थानिदेवतात्मत्वमुक्तम् । अथ स्थानभूतलोकात्मत्वमाह— **एष पृथिवीति** । अन्तरिक्षं द्यौश्च उपलक्ष्येते । अथ निशाप्रकाशसूर्यव्यतिरिक्तसर्वज्योतिरात्मत्वमभिप्रेत्याह—**रयिर्देव** इति । एवं लोकात्मत्वं लोकपालात्मत्वं चोक्तम् । अथ लोकान्तर्गतसर्वपदार्थात्मत्वमाह— **सदसच्चेति** । इत्थं संसारमण्डलं कृत्स्नमेतदधीनसत्ताकमित्युक्त्वा एतदतिक्रम्य प्राप्या मुक्तिरप्येतदधीनेत्यभिप्रेत्याह— **अमृतं चेति** । एष रयिर्देवः ; यत् सदसच्च अमृतं च तत् एष इत्यन्वयः ।

**सदसच्छब्दाविति** । अस्ति विद्यते इत्यर्थकरणात् वर्तमानाद्यर्थता । विद्यमानमात्रोपलम्भनत्वादन्यथात्वाच्च प्रत्यक्षाप्रत्यक्षज्ञानयोः प्रत्यक्षेत्यादि । 'असद्वा इदमग्र आसीत् । ततो वै सदजायत' इत्यादिप्रयोगपरमर्शेन स्थूलेत्यादि । 'नासतो विद्यते भावो नाभावो विद्यते सतः' इत्याद्यनुसारेण चेतनेत्यादि ।

**अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । ऋचो यजूँषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥**

**अरा इवेति** । चक्रस्य नाभिनेम्यन्तराळवर्तीनि[2] काष्ठानि अरशब्देनोच्यन्ते । चक्रस्य मध्यप्रदेशो नाभिशब्देनोच्यते । यथा अरा नाभावर्पिताः एवमस्मिन् प्राणे सर्वं प्रतिष्ठितमित्यर्थः । सर्वशब्दार्थं स्पष्टयति— **ऋचो यजूँषीति** । अत्र ब्रह्मक्षत्रशब्दौ स्थावरजङ्गमात्मकप्राणिमात्रोपलक्षकौ[3] ॥ ६ ॥

६. सदसच्चेति पूर्वं यदुक्तं तदेवात्र विशदीक्रियते । तत्र इमे विशेषाः । पूर्वं सामानाधिकरण्येनोक्तिः । इह तु 'प्राणे सर्वं प्रतिष्ठितम्' इति वैयधिकरण्येन । अरा इव रथनाभाविति दृष्टान्तघटना । निदर्शनार्थं ऋचो यजूंषि सामानीति कतिपयप्रधानभूतविशेषनिर्देशश्चेति । अत्र 'ज्ञानं कर्म च कर्ता च' इति गीतानिर्देशक्रमः स्मर्यत इति विभाव्यम् ।

---

1. ग्र. 'अन्भूतो देवः'. पू. 'रयिर्देवः । चन्द्रमा इति यावत्' । 2. ग्र. 'नाभिनेम्योः' पू. ना. 'नाभिनेमेः' । 3. ना.व्यतिरिक्तेषु '...शब्दः ... उपलक्षकः' ।

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥ ७ ॥**

एवमेष इत्यङ्गुल्या निर्दिश्य परस्परं दर्शयित्वा तद्गुणान् संकीर्त्य पश्चात् मेव मुख्यप्राणमभिमुखीकृत्य स्तुवन्ति— प्रजापतिश्चरसीति। त्वं प्रजानां रक्षकः सन् प्राणादिवायुरूपेण गर्भे सञ्चरसि। तथा गर्भोत्पादकतया तत्पोषकतया च[1] पितृरूप एव वर्तमान एव[2] त्वमुत्पादकत्वप्रातिलोम्येन पुत्रादिरूपेण जायसे। हे प्राण, स्थावरजङ्गमात्मिका इमाः प्रजाः तुभ्यं त्वदर्थाः त्वच्छेषभूताः यतः बलिं अन्नादिकं ते उपहरन्ति[3]। यस्त्वं प्राणनादिव्यापारैः सर्वत्र प्राणिषु प्रतिष्ठितोसीत्यर्थः[4] ॥ ७ ॥

**अङ्गुल्येति।** प्राणमाहात्म्याज्ञानात् प्रथमं गर्व आसीत्। सङ्कटे समुत्पन्ने स गर्वो गलितः। अज्ञानं तु स्थितम्। तेन परस्परमपृच्छन् 'कथं तदधीना अस्मत्स्थितिः। अस्मदपेक्षया को विशेषोऽस्येति। एकैकः स्वस्वविदितमितरेभ्योऽकथयत्। एषोऽग्निरित्येक आह। 'देवोऽग्निरप्येतदधीनस्थितिकः। का कथाऽस्मान्प्रति' इति तस्याभिप्रायः। एष सूर्य इत्यपर आहेत्येवं क्रमेण बोध्यम्। एवं परस्परोपदेशेन तस्य महिमानं समग्रं ज्ञात्वा तस्मिन् जातभूरिभक्तयः तं सम्बोध्य साक्षात्स्तुतवन्त इति भावः। एतच्छब्दप्रयोगलभ्यस्यार्थस्य गमनिकामात्रमेतत्। 'अनर्थोपनिपातसमनन्तरं सम्भ्रान्ताः प्रजापतिमन्यं वा कञ्चित् शरणमुपगम्य प्राणमहिमोपदेशं प्रार्थयामासुः। तदुपदेश एवायं **एषोऽग्निरि**त्यादिः। ततो जातप्रबोधाः प्राणं स्तुवन्ति प्रजापतिश्चरसीत्यादिने'त्यपि शक्यं वक्तुम्। न चैवं एषोऽग्निरित्यादिमन्त्रद्वयस्य अन्योपदेशत्वे 'ते स्तुवन्ति' इत्येतद् विरुध्येतेति शङ्क्यम्। ते एषोग्निरित्याद्युपदेशश्रवणेन प्रीताः 'प्रजापतिश्चरसि गर्भे' इत्यादिना स्तुवन्तीत्यर्थात्। किञ्च मा मोहमापद्यथेति हि पूर्वं तेषां अज्ञानरूपो मोह उक्तः। इदानीं स्तुवन्तीत्यनेन आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायेन माहात्म्याज्ञाने स्तुत्यसम्भवात् तद् ज्ञात्वा स्तुवन्तीत्याक्षिप्यते। तथा चोक्तरीत्या योजना कार्येति न कोऽपि दोषः।

अस्मिन् मन्त्रे क्रमेण कारणरूपत्वं कार्यरूपत्वं शेषित्वं जीवयितृत्वं चोक्तम्।

**देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा। ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥**

---

1. ना. 'पोषकतया च' नास्ति. आ. 'च' नास्ति। 2. ग्र. 'एव' नास्ति। 3. आ. ना. 'बलिं हरन्ति' इति मूलं तस्येदं भाष्यं च नास्ति। 4. आ. ना. 'प्रतीतोऽस्सीत्यर्थः'।

देवानामसीति । वह्नितमः हविषां वाहकतमः । **पितॄणामिति** । मुख्यः पितृप्रीतिहेतुभूतस्त्वमेवेत्यर्थः । अथर्वाङ्गिरसामृषीणां सत्यं उत्कृष्टं चरितं नित्यनैमित्तिकादिलक्षणं कर्म त्वमसीत्यर्थः[1] ॥ ८ ॥

वहतीति वह्निः । अतिशयेन वह्निः वह्नितम इति यौगिकं पदमित्यभिप्रेत्याह— **वाहकतम** इति । **पितृप्रीतीति** । पितृभ्यो हविःप्रदानसाधनभूतेन स्वधाशब्देन प्रीतिहेतुर्लक्ष्यत इति भावः । अनेन देवयज्ञः पितृयज्ञः तद्व्यतिरिक्तं च सर्वं कर्म त्वदनुग्रहादेव प्रवर्तत इत्युक्तम् ।

**इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता । त्वमन्तरिक्षे चरसि सूर्यस्त्वञ्ज्योतिषां पतिः ॥ ९ ॥**

**इन्द्रस्त्वमिति** । हे प्राण त्वं इन्द्रः परमेश्वर इत्यर्थः । "इदि परमैश्वर्ये" इति हि धातुः । तेजसा सर्वसंहरण[2]सामर्थ्यलक्षणेन तेजसा त्वं रुद्रः रोदनहेतुः । स्थितिकाले परिरक्षकश्चेत्यर्थः । **त्वमन्तरिक्ष** इति । ज्योतिषां प्रकाशकानां पतिः श्रेष्ठः सूर्यो भूत्वा अन्तरिक्षे चरसि[3] ॥ ९ ॥

९. **परमेश्वर इति** । अनेन सृष्टिकारणत्वमभिप्रेतम् । स्थितिसंहारकारणत्वं कण्ठोक्तम् । उत्तरार्धेन सूर्यादिसर्वदेवतारूपत्वमुच्यते । तथा च सर्वकर्मसमाराध्यसर्वदेवमयस्त्वमित्यस्य मन्त्रस्यार्थ इति भावः ।

इन्द्रः परमेश्वरस्त्वं तेजसा यज्ञपरिपन्थिभ्यो रक्षोभ्यो यज्ञस्य परिरक्षिता रुद्रः तेषां रोदयिता पृथिवीस्थानः अग्निः असि । त्वमन्तरिक्षे चरसि अन्तरिक्षस्थानो वायुश्च त्वम् । द्युस्थानो ज्योतिषां पतिः सूर्यश्च त्वमित्यपि शक्यं व्याख्यातुम् ।

**यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः । आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥**

**यदा त्वमभिवर्षसीति** । हे प्राण त्वं यदा मेघरूपी अभितो वर्षसि तदा ते त्वदीयाः इमाः प्रजाः आनन्दिन्यो भवन्ति । कस्य हेतोः? कामाय

1. म. '... लक्षणं च त्वमेवेत्यर्थः' । 2. पू. 'संहार ...' । 3. आ. "ज्योतिषां पति चन्द्र इत्यर्थ इति युक्तम् । अन्यथा द्वितीय'त्वं' पदं व्यर्थं स्यात्" इति टिप्पणी पत्रप्रान्ते लिखिता दृश्यते ।

अभिलषितार्थाय पर्याप्तमन्नं भविष्यतीति । "तद्यदा सुवृष्टिर्भवति आनन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यती" ति छान्दोग्ये (७-१०-१) श्रवणादिति द्रष्टव्यम् ॥ १० ॥

आराधनेन प्रीतस्त्वमेव फलं ददासीत्येतन्मन्त्रार्थः ।

**व्रात्यस्त्वं प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः । वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥ ११ ॥**

**व्रात्यस्त्वं प्राणे**ति । हे प्राण संस्कारहीनो ब्राह्मणोऽपि त्वमेव[1] । मुख्यो मन्त्रद्रष्टा ऋषिरपि त्वमेव । विश्वस्य अत्ता संहर्ता च त्वमेव । सतां साधूनां रक्षकोऽपि त्वमेव । वयं ते आद्यस्य अदनीयस्य भोग्यस्य दातारः कर-प्रदाः । किंकरा इति यावत् । हे मातरिश्वन् त्वं नः पिताऽसि पोषकोऽसीत्यर्थः । मातरिश्वनः ' इत्यत्र ' नकारद्वित्वाश्रवणं छान्दसत्वादिति [2]द्रष्टव्यम् ॥ ११ ॥

**संस्कारहीन इति** । अनुपनीतस्य कुतोऽध्ययनम्? कुतस्तरां वेदार्थज्ञानम्? कुतस्तमामात्मज्ञानम्? तादृशगर्हणीयजडतमरूपोऽसि त्वम् । न च तेन ते काचन हानिः । उत्तमऋषिरूपोऽसि । न च तेन कश्चिदतिशयः । एवं संहरणेन पालनेन वा न ते कश्चन विशेषः । अतो यद्युत्क्रामन् अस्माकमनर्थमुत्पादयसि यदि वा तिष्ठन् प्रतिष्ठापयसि न तेन ते कश्चिद् विशेषो भवति । अथापि अस्माकं तव च विद्यमानं सम्बन्धविशेषं विचिन्त्य वयं रक्षणीयाः । कः स सम्बन्ध इति चेत् तव यद् भोग्यं तस्य वयमुपहर्तारः किङ्कराः । उपहृतं यथोचितमुपयुज्य त्वत्पुत्रकल्पानामस्माकं पोषकस्त्वम् । अयं स सम्बन्धः । ततोऽनुग्राह्या वयमिति । अस्य मन्त्रस्य छायामनुसरत् श्रीदेशिकस्य अभीतिस्तवपद्यमिदं इहानुसन्धेयम्—

निसर्गनिरनिर्हृता तव निरंहसः श्रूयते ततस्त्रियुग सृष्टिवद् भवति संहृतिः क्रीडितम् ।
तथापि शरणागतप्रणयभङ्गभीतो भवान् मदिष्टमिह यद् भवेत् किमपि मा स्म तज्जीहपत् ॥

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥**

---

1. आ.' व्रतिषु साधुः व्रत्यः । स एव व्रात्य इति युक्तम् । स्पष्टा चेयं रीति-रुज्ज्वलायामादित्यप्रकरणे' इति टिप्पणी दृश्यते । 2. आ.'व्यतिरिक्तेषु ' इति नास्ति ।

**या ते तनूर्वाचीति ।** वागादीन्द्रियेषु तत्तदिन्द्रियनियमनानुकूला या[1] शक्तिः सततं प्रतिष्ठिता तां शिवां शोभनां कुरु । उत्क्रमणेनाशिवां मा कुरु । उत्क्रमणं मा कार्षीरित्यर्थः ॥ १२ ॥

स्तुतिप्रीतेन प्राणेन किं मया सम्प्रति कर्तव्यम्? इति पृष्टाः स्वाभिमतं प्रार्थयन्ते—**या ते** इत्यादिना मन्त्रद्वयेन । तत्रादौ उत्क्रमणाभावप्रार्थनम् । तनूर्नाम अंशः शक्तिः । अस्माकं स्वरूपलाभः अस्मासु निहितेन त्वदीयशक्तिलेशेन । यदि त्वमुत्क्रम्य गच्छसि तर्हि सा अस्मासु स्थिता त्वदीया शक्तिः अशिवा अकार्यकरी असत्प्राया स्यात् । ततो वयं च । तस्मान्मोत्क्रमीरिति ।

**प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् । मातेव पुत्रान् रक्षस्व श्रीश्च[2] प्रज्ञाञ्च धेहि न[3] इति ॥ १३ ॥**

इति द्वितीयः प्रश्नः ॥

**प्राणस्येदं वशे सर्वमिति ।** जगदिदं सर्वं प्राणस्य वशे वर्तते । वश इच्छा । तदधीनमिति यावत् । यच्च त्रिदिवे स्वर्गादिलोके प्रतिष्ठितं तदपि प्राणाधीनम् । तस्मात् पुत्रान् मातेव अस्मान् रक्षस्व । अस्माकं स्वस्वकार्यनिष्पादन-सामर्थ्यलक्षणाः श्रियः तदनुकूलप्रज्ञाश्च विधत्स्व ॥ १३ ॥

**इति प्रश्नोपनिषद्भाष्ये द्वितीयः प्रश्नः ॥**

एवमनिष्टनिवृत्तिं प्रार्थ्य अथेष्टसम्पत्तिं प्रार्थयन्ते—**प्राणस्येति ।** यां प्रयोजनमनपेक्ष्य केवलं वत्सलतया माता पुत्रान् रक्षति । तथा त्वमस्मान् रक्षितुमर्हसि । का रक्षा? श्रियां प्रज्ञायाश्च विधानम् । न च 'भवदभिमतपूरणं ममाशक्यमिति त्वया वक्तुं शक्यं युक्तं वा । यत् किञ्चिदस्मिन् लोके वर्तते यच्च लोकान्तरे तस्य सर्वस्य त्वदिच्छाधीनत्वात् । तदस्मान् रक्षेति । एतेन प्रार्थनाप्रकरणे कथं पुनर्महिमकथनमिति शङ्का निरस्ता वेदितव्या । प्रार्थनो-पयोगितया कथनात् । ननु 'प्राणस्येदं वशे' इति परोक्ष इव भाषणमनुपपन्नम् । तमभिमुखीकृत्य स्तुतिप्रार्थनयोः करणात् । तवेदं वशे सर्वमिति तु भाव्यम् । सत्यम् । 'हे प्राण तवेदं वशे' इत्यस्मिन्नेवार्थे इयं काचन वचनभङ्गीति गृह्यताम् ।

**तदनुकूलेति ।** पुनरेवं त्वयि अपचारो यथा न स्यात् तथा विवेकं चेति द्रष्टव्यम् ।

इति द्वितीयप्रश्नटिप्पणी

---

1. आ. ना. पू. 'या' नास्ति । 2. आ. 'श्रियश्च प्रज्ञां च विधेहि नः' । 3. ना. 'श्रीश्च प्रज्ञां च विधेहि नः' । पू. श्रीश्च प्रज्ञां विधेहि नः' ।

## अथ तृतीयः प्रश्नः ॥

**अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ। भगवन् कुत एष प्राणो जायते कथमायात्यस्मिञ्छरीरे आत्मानं वा प्रविभज्य कथं प्रतितिष्ठते[1] केनोत्क्रामते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ १ ॥**

**अथ हैनं कौसल्य** इति । स्पष्टोऽर्थः । प्रातिष्ठते प्रतितिष्ठतीत्यर्थः । बाह्यमभिधत्ते बाह्यरूपेण सन्निधत्त इत्यर्थः । बाह्यमित्यस्य सन्निधानक्रियाविशेषणत्वात् नपुंसकत्वम्[2] ॥ १ ॥

### अथ तृतीयः प्रश्नः

मूले **कौसल्यश्चेति** । उपनिषदारम्भे ऋषीणां नामनिर्देशेषु आद्येषु चतुर्षु चकारघटनं अन्त्ययोर्द्वयोस्तदभावं चावधाय व्यमृशाम । तं विशेषं स्मारयन् भगवान् वेदपुरुषः नामनिर्देशस्य साक्षाद्विपरीतेन क्रमेण ऋषीणां प्रश्नान् निबध्नन् अन्त्ययोर्द्वयोः प्रश्नानन्तरमद्य आद्येषु चतुर्षु चरमस्य कौसल्यस्य प्रश्ननिबन्धनावसरे चकारं घटयतीति ध्येयम् ।

प्राणस्येतरेभ्यः श्रैष्ठ्यं पूर्वमुक्तम् । तत्सम्बन्धिनो विशेषा इह प्रतिपाद्यन्त इति सङ्गतिः ।

**बाह्यरूपेणेति** । बाह्यं यथा तथाऽभिधत्त इति शाब्देऽन्वये अर्थलब्धोऽयमर्थः । सन्निधानस्य बाह्यत्वं हि कर्तृबाह्यत्वेनेति भावः ।

**तस्मै स होवाचातिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥**

**तस्मै स होवाचेति** । स्पष्टोऽर्थः । अतिप्रश्नान् प्रश्नमतिक्रम्य वर्तमानान् प्रश्नायोग्यान् रहस्यार्थान् पृच्छसि । तस्मात् त्वं ब्रह्मिष्ठोऽसि प्रायेण 'ब्रह्मविदसि । न प्राकृत इति यावत् । अतस्तेऽहं योग्यत्वात् ब्रवीमीत्यर्थः ॥ २ ॥

'अतिप्रश्नान् पृच्छसि । अतो ब्रह्मिष्ठोसि' इति तं प्रशंसन् प्रथममुवाच । पश्चात् 'तस्मात् तेऽहं ब्रवीमि' इत्यादि चोवाचेति इतिकारयोजना द्रष्टव्या ।

ब्रह्मविदां श्रेष्ठत्वे कथं आचार्यान्वेषणं शिष्यवृत्तिश्चेत्यनुपपन्नमिवेदं भाति । अतो व्याख्याति—**प्रायेणेति** । ननु प्राणविषयैः प्रश्नैः प्रष्टुः प्राणवित्त्वमाक्षिप्येत न कियदपि ब्रह्मवित्त्वमित्यत्र नात्र ब्रह्मपदं साक्षात्परब्रह्मपरम् । अपि तु सामान्यजनानां यद् दुर्विज्ञेयं, गूढं, तत्परमिति समाधानं सूचयन्नाह—**न प्राकृत** इति ।

---

1. प्र. 'प्रतिष्ठते' । 2. प्र. पू. 'नपुंसकत्वं' नास्ति ।

**आत्मन एवैष प्राणो जायते। यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥**

प्रथमप्रश्नस्योत्तरमाह–**आत्मन एवैष प्राण इति**। परमात्मन एवैष प्राणो जायत इत्यर्थः। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति श्रुतेरिति द्रष्टव्यम्। "कथमायात्यस्मिन् शरीरे" इत्यस्योत्तरमाह—**यथैषा पुरुषे छाये**ति। यथा पुरुषे गच्छति छायापि सहैव गच्छति, न हि छायागमने सामग्र्यन्तरमस्ति, एवमेतस्मिन्[1] पुरुषे जीवे एतन्मनः अकृतेन अयत्नेन,कृतशब्दोऽयत्नार्थकः, यत्नमन्तरेण, आततं अविनाभावेन संश्रितम्। एवमेव प्राणोऽप्यकृतेन अयत्नेन अस्मिन् शरीरे आयाति। मनःप्राणयोः पुरुषच्छायावत् पुरुषाविनाभूतत्वात् पुरुषेण सहैव प्राणस्य सम्बन्धः। अतः प्राणगमने[2] मनस इव[3] न पृथक्कारणमपेक्षितमिति भावः ॥ ३ ॥

मनोऽपि दृष्टान्ततयोपात्तमिति ज्ञापयन् योजयति—**एव**मिति। यथा चेत्यर्थः।

**यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते ॥ ४ ॥**

"आत्मानं वा प्रविभज्य कथं प्रतितिष्ठत" इति तृतीयप्रश्नो[4]त्तरमाह— **यथा सम्राडेवेति**। यथा राजा कार्येष्वधिकृतान् स्वसेवकान् इमान् ग्रामानधितिष्ठ इमान् ग्रामानधितिष्ठेति पृथक्पृथग्विनियुज्य तन्मुखेन तेषु ग्रामेषु यथा सन्निधत्ते, एवमेवैष मुख्यप्राण इतरेषु प्राणेषु ग्रामस्थानीयेषु स्वांशभूतापानव्यानादिमुखेन सन्निधत्ते। अधितिष्ठतीति यावत् ॥ ४ ॥

**तृतीयेति**। आत्मानमित्यनेन प्राण एक एव बहुधा भिन्नो भवतीति सूचितम्। कानि तानि भिन्नानि रूपाणि। एषु प्रधानाप्रधानभावः कीदृश इति प्रष्टुरभिप्रायः। तत्र दृष्टान्तप्रदर्शनपुरस्सरं भिन्नेषु स्वीयरूपेष्वपि प्राणस्यैव प्राधान्यं ब्रुवन् आचार्यः उत्तरमुपक्रमते—**यथा सम्राडेवेति**। इतरेषां प्राधान्यशङ्काऽपि न युज्यत इत्येवकारार्थः। **अधितिष्ठेति**। मूले आत्मनेपदं व्यत्ययेनेति भावः। व्यत्ययोऽपि फलस्य कर्त्रभिप्रायत्वबोधनद्वारा शासनातिलङ्घने

1. आ. ना. 'अस्मिन्' 2. ग्र. 'प्राणानां गमने' आ. 'प्राणगमने' 3. आ. ना. पू. 'मनस इव' नास्ति। 4. ग्र. 'तृतीयस्योत्तर'।

त्ररूपहानिः स्यादिति व्यञ्जनार्थः । दृष्टान्ते 'विनियुङ्क्ते' इत्येतत् उत्तरत्र 'सन्निधत्ते' इत्यनेन ऐरूपमिलतः इदं ल्यबन्तं कृत्वा शेषं पूरयतीति सावधानं द्रष्टव्यम् । **ग्रामस्थानीयेष्विति** । यमसिसन्धिः । अधिकृतानितिवत् इतरान् प्राणानिति द्वितीयाश्रवणेन अधिकृतस्थानापन्नत्वं न न्तव्यम् । अर्थविरोधे शब्दसारूप्यस्याकिञ्चित्करत्वात् । विवक्षातः कारकाणीत्युक्तरीत्या अधि-रणस्यैव कर्मत्वेन विवक्षितत्वोपपत्तेः । न च 'यथा सम्राट् अधिकृतान् विनियुङ्क्ते एवमेष णः चक्षुरादीन् इतरान् प्राणान् चक्षुर्गोलकादिषु स्थानेषु सन्निधत्ते सम्यङ् निदधाति विनि-ङ्क्ते' इति ऋजु व्याख्यानं कुतो न क्रियत इति शङ्क्यम् । इन्द्रियाणां तदधीनवृत्तित्वस्य र्वप्रश्न एवोक्तत्वेनेह अवक्तव्यत्वात् । इहापृष्टत्वेनासङ्गतत्वात् । 'पायूपस्थेऽपानन्' इति विव-गावसरे इन्द्रियाणामधिकरणत्वस्यैव स्पष्टीकरणाच्चेति । **स्वांशभूतेति** । अपानादयः स्वांशा ।ाधिकृतस्थानापन्ना इति भावः । मूले **पृथगिति** । पृथक् सन्निधानार्थमेव विभाग इत्यनेन पितम् ।

**पायूपस्थेऽपानन्[1] चक्षुश्श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥**

**पायूपस्थेऽपानन्निति** । तत्र पायुश्चोपस्थश्च पायूपस्थं तस्मिन् अपानन् त्रपुरीषापकर्षणं कुर्वन् प्रतितिष्ठति[2] प्रतिष्ठितो भवति । तदधिष्ठाता भवतीत्यर्थः । खनासिकाभ्यां निर्गतो वायुः प्राणरूपःसन् चक्षुश्श्रोत्रे चक्षुश्च श्रोत्रञ्च चक्षुश्श्रोत्रं स्मिन् प्रतितिष्ठति । तदधिष्ठाता भवतीत्यर्थः । मध्ये तु समानः सन् वतिष्ठते । एष हि समानः हुतं भुक्तमन्नादिकं समं नयति सप्तधातुसाम्यं नयति । धातुरूपेण विभागं करोतीति यावत् । तस्मात् समानवायोर्हेतोः जाठराग्नेः सप्त[3] काली कराळी"त्येवमाद्या अर्चिषः प्रादुर्भवन्ति ॥ ५ ॥

प्राणस्य केन केन रूपेण विभागः, विभक्तस्य कथं केन प्रकारेण कस्मिन् कस्मिन् तिरिति साक्षात्प्रश्नोत्तरमुच्यते । प्राणः पायूपस्थेऽपानन् प्रतिष्ठते ; चक्षुश्श्रोत्रे स्वयं स्वरूपेण तः, प्राणन्निति यावत्, प्रतिष्ठत इति योजना द्रष्टव्या । **समानः सन्निति** । समान इति ।यविशेषणम् । प्रतिष्ठत इत्यनुषज्य वाक्यपूरणमिति भावः ।

---

1. अत्र 'अपानं' इति सर्वत्र मूलपाठः । एतद्भाष्यानुसारेण 'अपानन्' येव प्रामाणिकः पाठ इति स्फुटं ज्ञायते । 2. आ. ना. 'कुर्वन् सन्निधत्ते ानवायुर्भूत्वाऽधितिष्ठतीति यावत्" । पू. 'तस्मिन् प्रतितिष्ठति । 3. आ. . 'सप्त ज्वालाः......प्रादुर्भवन्ति' पू. 'सप्तार्चिषः कालीत्येवमादयः...' ।

**सममिति**। यद्यपि समित्युपसर्गपूर्वात् अनधातोरेव समानपदनिष्पत्तिः तथापि तन्मात्राधीनकार्यविशेषप्रदर्शनौपयिकतया निरुक्तरीत्येदं निर्वचनं दर्शितमिति बोध्यम्। **जाठरेति**। एतदग्निवर्धनेन भुक्तान्नजरणमस्य कर्मेति भावः।

**हृदि ह्येष आत्मा। अत्रैत[1]देकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु[2] व्यानश्चरति॥ ६॥**

**हृदि ह्येष आत्मेति**। एष जीवात्मा हृदि हृदये यत्र समानरूपेण प्राण आस्ते तत्र स्वयमपि वर्तते। अत्र हृदये नाडीनामेकाधिकं[3]शतं वर्तते। तासां नाडीनां मध्ये एकैकस्या द्वासप्ततिप्रभेदा भवन्ति। एकैकं द्वासप्ततिप्रभेदं प्रति शाखाभूतनाडीसहस्राणि शतं शतं भवन्ति। तासु नाडीषु व्यानरूपप्राणः[4] चरतीत्यर्थः॥ ६॥

**यत्र समानेति**। मध्य इति पूर्वोक्तं स्थानमेवेह हृदीति निर्दिश्यत इति भावः। हिः प्रसिद्धौ। अत्र आत्मावस्थितिकथनं यया कयाचिन्नाड्या तस्य निर्गमनसम्भवस्फोरणाय। **द्वासप्ततिप्रभेदा** इति। यद्यपि एकैकस्याः शतं शतं प्रभेदा भवन्ति तत्र प्रतिप्रभेदं द्वासप्ततिः प्रतिशाखानाडीसहस्राणीति श्रुतक्रमापरित्यागेन युक्तं व्याख्यातुं न तु तत्परित्यागेन अव्यवहितश्रुताया द्वासप्ततिसङ्ख्यायाः प्रतिशाखानाडीसहस्रविशेषणत्वं प्रतीयमानमुपेक्ष्य अश्रुतप्रभेदविशेषणत्वं व्यवहितायाः शतसङ्ख्यायाः प्रतिशाखानाडीविशेषणत्वं च परिकल्प्य कृतमिदं व्याख्यानं युक्तमिति भाति तथाप्येवं भाषितवत आचार्यस्य अयमाशयः। एकशतं नाडीनामिति प्रधाननाड्य उक्ताः। प्रतिशाखानाडीसहस्राणीति प्रतिशाखाशब्दवाच्या अवान्तरशाखानाड्य उच्यन्ते। मध्ये शाखानाड्यो वक्तव्याः। एवं स्थिते शतंशतमित्यतः परं श्रूयमाणस्य एकैकस्या इत्यस्य ततः पूर्वं निवेशनेन 'तासामेकैकस्याः शतं शतं शाखाः' इत्यर्थो वाच्य इत्येको मार्गः। स परैराश्रित एव। उक्तक्रमभेदं विना 'एकैकस्या द्वासप्ततिर्द्वासप्ततिः शाखाः' इत्यर्थमभ्युपेत्य शतं शतमित्यस्य तु उत्तरत्रान्वयो वाच्य इत्ययमन्योऽपि मार्गोऽस्तीति।

**अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्॥ ७॥**

**अथैकयोर्ध्व उदान इति**। अथेति वाक्योपक्रमे। (एकया) कयाचिन्नाड्योर्ध्वमुख उदानः पुण्येन हेतुना पुण्यं स्वर्गादिलोकं, पापेन हेतुना पापं

---

1. आ. ना. पू. 'एतत्' नास्ति. 2. आ. ना. पू. 'तासु'। 3. आ. ना. 'एकाधिकशतम्'। 4. ग्र. पू. 'प्राणः' नास्ति।

नरकादिलोकं, उभाभ्यामेव[1] मनुष्यलोकं, नयतीत्यर्थः । "आत्मानं वा प्रविभज्य कथं प्रातिष्ठत[2]" इति प्रश्नस्य "यथा सम्रा" डित्यारभ्य "उभाभ्यामेव मनुष्य-लोक" मित्येतदन्तं प्रतिवचनम् । तन्मध्ये "अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयती" त्यनेन "केनोत्क्रमत" इति चतुर्थप्रश्नस्योत्तरमुक्तं भवति ॥ ७ ॥

**वाक्योपक्रम** इति । प्रश्नविशेषोत्तरदानपरवाक्यविशेषप्रवृत्तिद्योतनपरमिति भावः । **कयाचिदि**ति । एकयेत्यनेन न नियतो नाडीविशेषो विवक्षितः अपि त्वनियता याका-चिन्नाडी । 'विष्वङ्ङन्या उत्क्रमणे भवन्ती' ति श्रुत्यन्तरादिति भावः । **इत्येतदन्तमिति** । पञ्चवृत्तिर्हि प्राणः । तत्रोदानवर्जने कथमात्मानं प्रविभज्य तिष्ठतीति प्रश्नस्य समाधानमपरिपूर्णं भवेदिति भावः । **चतुर्थेति** । पञ्चसु वृत्तिषु कया उत्क्रामत इति प्रश्नः । उदानवृत्त्येति समा-धानम् । तत्र विभिन्नलोकनयनं तद्धेतुश्च आचार्येण कृपया उपदिश्यत इति ज्ञेयम् ।

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृ-ह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदा-काशःस समानो वायुर्व्यानः ॥ ८ ॥**

"कथं बाह्यमभिधत्त" इत्यस्योत्तरमाह—**आदित्यो ह वै बाह्य इति** । चाक्षुषं प्राणं चक्षुर्गोलकवर्तीन्द्रियं आलोकाख्यसहकारिप्रदानेनानु[3]गृह्णानः बहिरा-दित्यरूपेणोदेति । यद्यपि प्राणस्यादित्यात्मकत्वं न संभवति तयोर्भेदात्, तथापि प्राणकलायाः सर्वत्र सत्त्वेनाभेदोपचाराद्वा, उपासनार्थतया वा, बाह्यानामादित्यादीनां प्राणात्मकत्वोक्तिरिति द्रष्टव्यम् । पृथिव्यां प्राणकलारूपा देवता या सा पुरुषस्या-पानवाय्वधिष्ठितपायूपस्थेन्द्रिये अनुगृह्णाना वर्तत इत्यर्थः । **अन्तरा यदाकाशः स समान** इति । आकाशाधिष्ठातृप्राणकलया[4] आकाशस्यौपचारिकी अभेदोक्तिर्द्रष्टव्या । एवमुत्तरत्रापि । "मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति" इत्यध्यात्मं[5] प्राणापानस्थानमध्यवर्तितया हि समानो निर्दिष्टः । बाह्याकाशस्यापि बाह्यप्राणरूपस्या-दित्यस्य बाह्यापानरूपपृथिव्याश्च मध्यवर्तितया समानत्वं युज्यत इति भावः । **वायु-र्व्यान** इति । बाह्यो वायुस्त्वगिन्द्रियानुग्राहको[6] व्यानरूपः ॥ ८ ॥

---

1. आ. ना. 'पुण्यपापाभ्याम्' । 2. आ. ना. पू. 'प्रतितिष्ठति' । 3. आ. ना. पू. 'प्रसादेन' । 4. आ. ना. '...कलायाः आकशस्य च' 5. ग. 'मध्ये' इत्यादि 'अध्यात्मं' इत्यन्तं नास्ति । 6. ग. पू. 'इन्द्रियानुग्राहकः' ।

**अन्तरेति** । आदित्यपृथिव्योरन्तराल इत्यर्थः । **त्वगिन्द्रियाद्यनुग्राहक** इति । अनेन चाक्षुषप्राणानुग्राहकत्वादादित्यस्य प्राणत्वमित्यापि शक्यं वक्तुमिति सूचितम् ।

**तेजो ह वा उदानस्तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥ ९ ॥**

**यच्चित्तस्तेनैष[1] प्राणमायाति प्राणस्तेजसा युक्तः । सहात्मना यथासङ्कल्पितं लोकं नतति ॥ १० ॥**

**तेजो ह वा उदान इति** । बाह्यं तेज उन्नयनहेतुत्वादुदान इत्यर्थः । **तस्मादिति** । यस्माद्धेतोस्तेजस एवोदानशब्दितोन्नयनहेतुत्वं, तस्मादेव उपशान्ततेजाः अपगतदेहौष्ण्यःसन् एषः मुमूर्षुर्जीवः यच्चित्तः यस्मिंश्चित्तं यस्य स यच्चित्तः यत्काम इति यावत् । यादृशमनुष्यदेवादिजन्मकामो भवति तत्कामनावशेन पुनर्भवशब्दितां पुनरुत्पत्तिं प्राप्तुं "वाङ्मनसि संपद्यते[2]" "वाङ्मनसि दर्शनाच्छब्दाच्चे"ति श्रुतिसूत्र[3]तद्भाष्योक्तरीत्या मनसा संश्लेषविशेष[4]मापन्नैर्वागादिभिरिन्द्रियैः सहितं प्राणं स मुमूर्षु[5]जीव आयाति । यद्यपि "इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति मुख्यामुख्यप्राणानां जीवोपगम एव श्रूयते, न तु जीवस्य प्राणोपगमः । सूत्रितञ्च— "सोऽध्यक्षे तदुपगमादिभ्यः" इति । तदर्थस्तु तदधिकरणभाष्ये उक्तः । तत्र हि 'यथा "वाङ्मनसि संपद्यते मनः प्राण"इति वचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोस्संपत्तिः, तथा "प्राणस्तेजसी"ति वचनात् तेजस्येव प्राणः संपद्यत इति प्राप्त उच्यते— "सोऽध्यक्ष"इति । सः प्राणः अध्यक्षे करणाधिपे जीवे संपद्यते ।, कुतः? तदुपगमादिभ्यः । प्राणस्य जीवोपगमस्तावच्छ्रूयते "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्तो"ति । तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते "तमुत्क्रामन्तं प्राणोऽनूत्क्रामतो"ति । प्रतिष्ठा च जीवेन सह श्रूयते— "कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि"ति । एवं जीवेन संयुज्य तेन सह तेजस्संपत्तिरिह "प्राणस्तेजसी"त्युच्यते । यथा

1. आ. ना. पू. 'तेन सः' । 2. ग्रं. "...सम्पद्यते इत्यत्र" । 3. प्र. 'श्रुति' नास्ति । 4. आ. ना. 'विशेष' नास्ति । 5. प्र. पू. सम्मुमूर्षुः' ।

यमुनाया गङ्गया संयुज्य सागरगमनेऽपि यमुना सागरं गच्छतीति वचो न विरुद्ध्यते, तद्व'दिति भाषितम्[1], तथाप्यस्य प्रकरणस्य प्राणप्रशंसापरत्वाज्जीवस्य प्राणोपगमोक्तिरुपपद्यत इति द्रष्टव्यम् । प्राणस्तेजसेति । अनन्तरं "प्राणस्तेजसि तेजः परस्यां देवताया"मिति श्रुत्युक्तरीत्या तेजसा परमात्मना च संयुक्तः प्राणः तत्तजीवात्मसंकल्पानुसारेण तं तं लोकं म्रियमाणं नयति । ततश्च तेज[2]स्सहितस्यैव प्राणस्योन्नयनहेतुत्वात् तेजसोऽप्युन्नयनहेतुत्वेनोदानत्वं युक्तमिति भावः । यद्यपि "प्राणस्तेजसी"त्यत्र तेजश्शब्देन सर्वाणि भूतान्युच्यन्ते न तेजोमात्रमिति "भूतेषु तच्छ्रुतेः, नैकस्मिन् दर्शयतो हि" इति सूत्रभाष्ययोः प्रतिपादितम्, तथापि "भूतान्तरसंसृष्टमेव तेजस्तेजश्शब्देनाभिधीयत" इति भाष्योक्तेस्तेजसः प्राधान्यात् तदुक्तिरुपपद्यत इति द्रष्टव्यम् ॥ ९ ॥ १० ॥

**बाह्यं तेज इति** । अनुपदमिदं स्पष्टीभविष्यति । **प्राप्तुमिति** । अध्याहृतमेतत् । **तेजसा सहितस्यैवेति** । शरीरारम्भकभूतसूक्ष्मेष्वन्यतमेन तेजसेत्यर्थः । **उदानत्वं युक्तमिति** । भूतसूक्ष्मस्य तेजस उदानत्वे तत्सजातीयस्य बाह्यस्य तेजसोऽपि तत्त्वं युक्तमिति भावः । **प्राधान्यादिति** । उद्गमनसाधनतयेह प्राधान्यं बोध्यम् ।

**य एवं विद्वान् प्राणं वेद । न हास्य प्रजा हीयतेऽमृतो भवति । तदेष श्लोकः ॥ ११ ॥**

**य एवं विद्वानिति** । एवं उत्पत्त्यागमनप्रतिष्ठादिप्रकारेण प्राणं य उपास्ते, तस्य पुत्रपौत्रादिलक्षणप्रजाहानिर्न भवति । परिशुद्धप्रत्यगात्मस्वरूपप्रतिपत्तिमुखेन ब्रह्मोपासननिष्पत्तिद्वारा[3] मोक्षहेतुश्च भवतीति द्रष्टव्यम् । **तदेष श्लोक इति** । तत् प्राणवेदनमधिकृत्य प्रवृत्तोऽयं श्लोक इत्यर्थः ॥ ११ ॥

**य उपास्त इति** । उपदेशाधीनस्य ज्ञानस्य विद्वानित्यनेनोक्तत्वात् वेदेत्यनेन उपासनात्मकमेव वेदनं विवक्षणीयम् । फलश्रवणाच्चेति भावः । **ब्रह्मोपासनेति** । तस्यैव साक्षान्मोक्षोपायत्वादिति भावः । **अधिकृत्येति** । प्राणवेदनस्य यः प्रकारः यच्च पार्यन्तिकं फलमुक्तं तत्प्रतिपादनपरः श्लोक इति ।

---

1. आ. ना. पू. श्रीभाष्यानुवादे बहुधा अन्यथाभावो दृश्यते । 2. म. पू. 'तेजसा' 3. म. पू. 'प्रीतिद्वारा' ।

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मञ्चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥**

इति तृतीयः प्रश्नः

**उत्पत्तिमायतिमिति** । उत्पत्तिं प्राणस्य परमात्मन उत्पत्तिं, मनसा सहागमनं, अस्मिन् शरीरे पायूपस्थादिस्थानेषु स्थितिं, "यथा सम्राडेवाधिकृता" नित्युक्तं स्वाम्यलक्षणं विभुत्वं, अध्यात्मं प्राणादिरूपेण पञ्चधा स्थितिं, चशब्दसमुच्चितमादित्यादिरूपेण पञ्चधा बाह्यमवस्थानञ्च विज्ञाय अमृतमश्नुते मोक्षं प्राप्नोति । विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति द्विर्वचनं प्रतिवचनसमाप्तिद्योतनार्थम् ॥ १२ ॥

इति प्रश्नोपनिषद्भाष्ये तृतीयः प्रश्नः

**अध्यात्ममिति** । आत्मनि शरीरे स्थितिं च पञ्चधा विज्ञायेत्यन्वयः । **प्राणादिरूपेणेति** । एतेन कथमध्यात्ममिति षष्ठप्रश्नस्य चरमस्य कुतः समाधानं नोक्तमिति शङ्कायाःपरिहारः सूचितः । आत्मानं वा प्रविसृज्येति तृतीयप्रश्नसमाधानेनैवास्यापि समाधानमुक्तं भवतीति । नन्वेवं सति पृथक् प्रश्न एवायं न प्रष्टव्यः । ज्ञातव्यांशाभावादिति चेत् सत्यम् । तथापि 'कथं बाह्यमभिधत्ते' इत्येतावन्मात्रप्रश्ने तस्य पूर्णता न भवेत् । कथं बाह्यमात्रं प्रति प्रश्नः? तत्प्रतिसम्बन्धि आन्तरं प्रत्यपि हि प्रश्नः कार्य इति जिज्ञासा जायेत । अतो निराकांक्षतया पूर्णत्वाय कथमध्यात्ममिति प्रश्नस्य अस्ति आवश्यकता । तथापि तृतीयप्रश्नोत्तरेणैव अस्यापि प्रश्नस्य उत्तरं दत्तं भवतीति प्रष्टुरभ्याशयात् तदभिज्ञेन आचार्येण तस्य पृथगुत्तरं न दीयत इति न काचिदनुपपत्तिरिति ।

इति तृतीयप्रश्नटिप्पणी

## अथ चतुर्थः प्रश्नः

**हरिः ओम् ॥ अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत्सुखं भवति[1] । कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥ १ ॥**

**अथ हैनं सौर्यायणीति** । स्पष्टोऽर्थः । **पुरुषे** ; सुप्ते सतीति शेषः । शिष्टं स्पष्टम् । **कान्यस्मिन् जाग्रति** । अत्रापि सुप्ते सतीति शेषः । (**कतर इति** ।) **एषः** द्योतनादिगुणयोगाद्देवः जीवः कतरः कीदृशः सन् स्वाप्नान्[2]

1. आ. पू. 'भवति' नास्ति । 2. आ. ना. स्वप्नान् ।

रथादीन् पश्यतीत्यर्थः । कस्य हेतोरेतत् वैषयिकं सुखमित्यर्थः । (कस्मिन्निति ।) स्पष्टोर्थः ॥ १ ॥

## अथ चतुर्थः प्रश्न. ।

अस्मिन् प्रकरणे प्राणस्य स्वापकाले इतरेभ्यो वैलक्षण्यं प्रतिपाद्यते । सर्वेषां परमात्मनि प्रतिष्ठा च ।

**कानीति** । देवा इति विशेष्यस्य बुद्धावसन्निहितत्वात् सामान्ये नपुंसकम् । सन्निहितत्वात्तु उत्तरत्र 'कस्मिन्नु सर्वे' इति पुल्लिङ्गम् । जीवेतरस्य सुखसम्भावनाविरहात् प्रश्नः सुखप्राप्तृविषयो न सम्भवतीति हेतुविषयतया योजयति—**कस्य हेतोरिति** । 'कतरः कीदृशः सन्' इति पूर्वप्रश्नपदव्याख्यानेऽप्ययमभिप्राय इति द्रष्टव्यम् । एतदित्यस्य व्याख्यानं **वैषयिकमिति** ।

**तस्मै स होवाच यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः पुनरुदयतः[1] [2]प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥**

**तस्मै स होवाचेति** । स्पष्टोऽर्थः । यथा सायंकालेऽस्तं गच्छतःसूर्यस्य किरणाः नानादिक्षु प्रसरणं विना आदित्यमण्डल एकीभवन्ति, पुनश्चोद्यतःसूर्यस्य किरणा नानादिक्षु प्रसरन्तः प्रकाशका भवन्ति, [3]एवमेवैतत्सर्वं इन्द्रियजातं परे इतरेभ्य उत्कृष्टे देवे द्योतनादिगुणयुक्ते मनसि एकीभवति । स्वस्वव्यापाराभिमुख्यविरोधिसंश्लेषविशेषयुक्तं भवतीत्यर्थः[4] । तेन श्रोत्रादीन्द्रियाणामुपरतत्वेनेत्यर्थः । शिष्टं स्पष्टम् । आनन्दः उपस्थेन्द्रियकार्यम् । [5]विसर्गस्त्वपानकार्यम् । नेयायते न गच्छतीत्यर्थः । स्वपितीत्याक्षत इत्यन्तेन[6] "कानि स्वपन्ति" इति प्रश्नस्य

---

1. ग्र. 'पुन· पुनरुद्यतः । 2. आ. पू. 'प्रचलन्ति । 3. ग्र. 'एव' नास्ति । 4. आ. ना. 'भवतीत्यर्थः' नास्ति । 5. ग्र. 'तु' नास्ति । 6. आ. ना. पू. अनेन ।

बाह्यज्ञानेन्द्रियकर्मेन्द्रियाणि स्वपन्ति, इत्युत्तरमुक्तं भवति । प्रत्येकमेकत्वाभिप्रायेण स्वपितीत्येकवचनम् । शिष्टं स्पष्टम् । ॥ २ ॥

**एतत्सर्वमिति** । तदेतदोरत्र नास्ति विशेष इति बोध्यम् । किं तत्सर्वमिति जिज्ञासायां तेन तर्हीति उत्तरैणोपपादकवचनेन लभ्यमर्थमाह—**इन्द्रियजातमिति** । एकीभवनानुगुणतया एकवचनमिति विभाव्यम् । दृष्टान्ते मरीचीनां विशिष्योपादानात् बहुत्वमवर्जनीयम् । **बाह्येति** । आन्तरं मनइन्द्रियमेकं विना अन्यानि सर्वाणीन्द्रियाणि स्वपन्तीत्युक्तमिति भावः । **स्वपितीत्याचक्षत** इति । अस्यानन्तरं 'ताः पुनरुदयतः प्रचरन्ति' इति दृष्टान्तचरमांशानुरोधेन 'तत पुनः प्रबुध्यमानस्य प्रचरति' इत्यनुसन्धेयम् । प्रकृतानुपयुक्तत्वात्तु श्रुतिः स्पष्टं न ब्रवीति ।

**प्राणाग्नय एवैतस्मिन् पुरे जाग्रति । गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात् प्रणीयते प्रणयनादाहवनीयः प्राणः ॥ ३ ॥**

**यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति स[1] समानः । मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥**

कान्यस्मिन् जाग्रतीत्यस्योत्तरमाह — **प्राणाग्नय इति** । प्राणापानादिरूपा अग्नय एवैतस्मिन् पुरशब्दनिर्दिष्टे शरीरे जागरणं कुर्वन्तीत्यर्थः । स्वापदशायां जाग्रत्सु प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेषूपासनार्थं अग्निहोत्रसंपत्तिं दिदर्शयिषुः तत्र व्याप्रियमाणं मन एव यजमानः, अपानो मूलाधारस्थतया गार्हपत्यः, तत्सन्निहितो व्यानश्चान्वाहार्यपचनशब्दितो दक्षिणाग्निः, अपानवायुमूलकः प्राणो गार्हपत्यात् प्रणीयमानाहवनीयतुल्यतया आहवनीयः, तदाधारकावुच्छ्वासनिश्वासौ 'द्वे आहवनीये' इतिनिर्दिष्टाहुतिद्वयं, उच्छ्वासनिश्वासहेयभूतःसमानो वायुः आहुती समं नयतीति निर्देशयोग्याध्वर्युः, उदानवायुस्तु यजमानस्य लोकान्तरोन्नयनहेतुत्वादुदान इत्यग्निहोत्राहुत्यवयवभूतान् यजमानाग्नित्रयाहुतिद्वयाध्वर्युकर्मफलभूतानष्टावपि पदार्थान् प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेष्वष्टासु दर्शयति— **गार्हपत्यो ह वा इति** ।

1. आ. पू. 'स' नास्ति ।

अत्र यद्यपि "एवमेवेमाःसर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती" ति ब्रह्मगमनं जीवस्यैव श्रूयते न मनसः, तथाऽपि मनसः पुरीतद्गमनश्रवणात् तद्गत-ब्रह्मगमयितृत्वोक्तिरुपपद्यत इति द्रष्टव्यम् ॥ ३ ॥ ४ ॥

**उपासनार्थमिति** । कानि जाग्रतीति पृष्टे प्राणा जाग्रतित्येवोत्तरं देयम् । तद्विहाय प्राणाग्नय इत्यग्नित्वादिकं परिकल्प्य यदुत्तरं दीयते तदुपासनार्थत्वमपि विरहे निष्फलं स्यादिति भावः ।

**हेतुत्वादुदान** इति । हेतुत्वादिष्टफलमिति युक्तं भवितुम् । यथास्थिते तु 'लोकान्तरो-न्नयनहेतुत्वादुदानशब्दवाच्यो भवति । अतः स लोकान्तरप्राप्येष्टफलरूपः' इत्युपस्कृत्य योज्यम् । इष्टफलं इष्टं इच्छाविषयीभूतं फलम् । यद्वा इष्टस्य कृतस्य यज्ञस्य फलम् ।

**अत्रैष देवः स्वप्ने महिमानमनुभवति । यद् दृष्टंदृष्टमनुपश्यति श्रुतंश्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूतञ्च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥**

"कतर एष देवः स्वप्नान् पश्यती" त्यस्योत्तरमाह— **अत्रैष देव इति** । अत्र अस्मिन्नवसरे एष देवः जीवः स्वप्ने करितुरगादि[1]लक्षणं महिमानमनुभवति पश्यति । जागरे प्राग्यद्दृष्टं तमेवार्थं अनुपश्यति अनु पश्चात्पश्यति अनुभवति । दृष्टंदृष्टं भूयो दृष्टमित्यर्थः । श्रुतमेवार्थमनुशृणोति । देशान्तरेषु दिगन्तरेषु[2] प्रत्यहमनुभूतमर्थं पुनः[3]पुनरनुभवति । दृष्टं [4]श्रुतमेवानुभवतीत्ययमपि नियमो नास्ति । कदाचित्पूर्वाननुभूतमपि स्वशरीरच्छेदनादिकमनुभवति । विद्यमानञ्चानुभवति अविद्यमानञ्चानुभवति । सर्वः पश्यति[5] सर्वःसन् पश्यति । द्रष्टा श्रोता घ्राता गन्ता वक्ता चेत्यादिसर्वरूपःसन् पश्यतीत्यर्थः । तदानीं जागरीयबाह्यज्ञानकर्मेन्द्रियाणामुप-रतव्यापारत्वेऽपि स्वाप्निकैरीश्वरसृष्टैः शरीरेन्द्रियैर्द्रष्टृत्वादिमान् सन्ननुभवतीति भावः ॥ ५ ॥

---

1. आ. 'करिकलभादि'... । 2. प्र. 'दिगन्तरेषु' नास्ति । 3. आ. ना. 'पुनः' इति नास्ति । 4. आ. ना. 'श्रुतं' नास्ति । 5. आ. ना. इदं मूलवाक्यं एतद् व्याख्यानं च नास्ति ।

**अस्मिन्नवसर** इति। यदा मनो ब्रह्म प्रति नीयमानं भवति न तु नीतमेव तदेत्यर्थः। महिमा ऐश्वर्यमित्यभिप्रेत्याह—**करितुरगादीति**। करिकलभादीति क्वचित् पाठः। **तमेवार्थमिति**। यच्छब्दश्रवणात् यद् दृष्टमित्यनूद्य तच्छब्दमध्याहृत्य तदनुपश्यतीति योजनीयम्। अर्थस्यात्र अश्रवणात् सामान्ये नपुंसकम्। विशेषापेक्षायां तु उत्तरवाक्यानुरोधेन अर्थ एव विशेष्यतयाऽनुसन्धेय इति भावः। एवमत्र भाष्ये 'एष देवो महिमानमनुभवति दृष्टमनुपश्यति श्रुतमनुश्शृणोति' इत्येवं दृष्टानुदर्शनादितुल्यतया तद्व्यतिरिक्तो महिमानुभवः प्रतिपाद्यतया दर्शितः। अन्यथाऽपि तु योजना शक्या। महिमानं महत्त्वं जागरावस्थायामविद्यमानं वैभवं शरीरान्तरेन्द्रियान्तरपरिग्रहानुगुणं अनुभवति प्राप्नोति, यत् येन महिम्ना अथवा यस्मात् कारणात् दृष्टंदृष्टमनुपश्यति श्रुतं श्रुतमनुश्शृणोति ... सर्वं पश्यति सर्वः पश्यति' इतीति बोध्यम्। **देशान्तरेष्विति**। अधिकरणमेव करणतया विवक्षितमित्याशयः। **प्रत्यहमिति**। प्रतिशब्दार्थः अनुभवे साक्षादन्वयविरहात् अहर्द्वाराऽन्वेतीति भावः। इदमुपलक्षणं प्रकारान्तरस्यापि। देशदिगन्तरैः प्रतिबद्धतया नियतसम्बन्धवत्त्वेन अनुभूतमित्येवमादिप्रकारेणापि हि शक्यं योजयितुमिति।

**स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिन् शरीर एतत्सुखं भवति**[1] ॥ ६ ॥

एतस्मिन्नन्तरे "सता सोम्य तदा संपन्नो भवति, तेजसा हि तदा संपन्नो भवती" ति श्रुत्युक्तरीत्या परप्रकाशकतया तेजश्शब्दितेन परमात्मना अभिभूतो भवति संपन्नो भवति। संपरिष्वक्तो भवतीति यावत्। तदा स्वाप्नान्पदार्थान् न पश्यतीत्यर्थः। ततश्च "कतर एष स्वप्नान्पश्यती" ति प्रश्नस्य ब्रह्मसंपत्तिविरहदशायां मनोमात्रपरिशेषसमये स्वाप्नान्पदार्थान्पश्यतीत्युत्तरमुक्तं भवति। कस्यैतत्सुखं भवतीत्यस्योत्तरमाह— अथ यदेतस्मिन्निति। यदेतत्सुखं[2] भवति तदेतस्मिन् शरीरे सत्येव भवतीत्यर्थः। शरीरमेव वैषयिकसुखहेतुरित्युक्तं भवति। "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुतेरिति द्रष्टव्यम् ॥ ६ ॥

स यदा तेजसाऽभिभूतो भवतीति अनुवादरूपत्वेऽपि वस्तुत उपदेश एवायमित्यभिप्रेत्य उपदेश्यमर्थमाह—**एतस्मिन्नन्तर** इति। स्वाप्नार्थानुभवे प्रवर्तमान इत्यर्थः। रीत्येति। सम्पन्नो भवतीत्यत्रान्वयः। तेजश्शब्दितत्वे हेतुः परप्रकाशकतयेति। "तस्य भासा सर्वमिदं विभाति"। ननु कीदृशः सन् स्वप्नान् पश्यतीत्येव पृष्टम् न तु कीदृशः सन् न पश्यतीत्यपि।

---

1. **आ. ना. यदेतस्मिन् शरीरे सुखं भवति। ईशाद्यष्टोत्तरशतोपनिषत्सु 'तदैतस्मिन् शरीरे एतत्सुखं भवती'ति दृश्यते। म्र. तदेतस्मिन्...'; शाङ्करमूले च।** 2. **आ. ना. पू. 'यत्सुखम्'।**

अत इदमसङ्गतमित्याशङ्कयाह--**ततश्चेति** । **ब्रह्मसम्पत्तिविरहेति** । तत्प्रश्नोत्तरशेषतयैव इदमप्युक्तमिति नासङ्गतिरिति भावः ।

**यदेतदिति**। यच्छब्दो व्यवहितेनापि एतत्सुखमित्यनेन सम्बध्यते। तदाक्षिप्तस्तच्छब्दस्तु 'एतस्मिन् शरीरे' इत्येनेनेति भावः । 'तदेतस्मिन्' इति पाठे तु तच्छब्दसार्थक्याय उत्तरत्र यच्छब्दोऽध्याहर्तव्य इति भावः ।

अत्रेदं बोध्यम् । कस्यैतत्सुखं भवतीति प्रश्नस्यायमर्थः । मनागपि स्वाप्नार्थानुभवं विना निद्रया जायमानं सुखं कस्य कीदृशस्य भवतीति । अत्रोत्तरं स यदा तेजसेत्यादि । जीवस्य परमात्मसम्पत्तेः प्राक् मनोमात्रं व्याप्रियते । तदा तदवस्थस्य जीवस्य स्वप्नदर्शनम् । यदा तु स तेन सम्पद्यते तदा मनसोऽप्युपरमात् स्वप्नदर्शनमत्यन्तं निवर्तते । ईदृशावस्थस्य निद्रासुखं भवतीत्याचार्यस्याशयः । स्वप्ने यदुक्तं 'महिमानमनुभवती'ति तद्व्यतिरेकप्रतिपत्त्यर्थम् एतस्मिन् शरीर इति । शरीरान्तरपरिग्रहेण स्वाप्नविषयानुभवः । अस्मिन्नेव शरीरे इदं सुखमिति । तथा च स यदा तेजसेत्यादेः पूर्वप्रश्नोत्तरशेषतां विनाऽपि योजनं सुकरमिति ।

**स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥**

कस्मिन् सर्वे प्रतिष्ठिता भवन्तीत्यस्योत्तरमाह—**स यथा सोम्येति** । वयांसि पक्षिणः, वासोवृक्षं निवासवृक्षं प्रति संप्रतिष्ठन्ते । सः दृष्टान्तो यथा, एवं परमात्मनि सर्वं प्रतिष्ठितं भवतीत्यर्थः ॥ ७ ॥

**वासोवृक्षमिति** । षष्ठ्यर्थे प्रथमा तस्या अलुक् च व्यत्ययेन । वृक्षमिति कर्मप्रवचनीययोगे द्वितीयेत्यभिप्रेत्य अपेक्षितं कर्मप्रवचनीयमध्याहरति **प्रतीति** । वृक्षं प्रति वृक्षे इत्यर्थः । पर आत्मनीति दार्ष्टान्तिकानुरोधात् । **तत् सर्वमिति** । जीवात्मपर्यन्तं सर्वमित्यर्थः । वृक्षे सम्प्रतिष्ठितान्यपि वयांसि न परस्परमत्यन्तं संश्लिष्टानि भवन्ति । अतस्तत्र बहुवचनम् । इन्द्रियादिकं तु अविभागमेकीभवति । अत एकवचनमिति विभाव्यम् ।

**पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यश्च श्रोत्रश्च श्रोतव्यश्च घ्राणश्च घ्रातव्यश्च रसश्च[1] रसयितव्यश्च त्वक्च स्पर्शयितव्यश्च वाक्च वक्तव्यश्च हस्तौ चादातव्यश्चोपस्थश्चानन्दयितव्यश्च वायुश्च विसर्जयितव्यश्च पादौ च गन्तव्यश्च[2] मनश्च**

---

1. आ. ना. 'रसनं च'। २. आ. ना. क्रमविपर्यासो दृश्यते—हस्तादातव्यानन्तरं पादगन्तव्यपाठ इति ।

**मन्तव्यञ्च बुद्धिश्च बोद्धव्यञ्चाहंकारश्चाहंकर्तव्यञ्च चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च ॥ ८ ॥**

सर्वशब्दार्थं प्रपञ्चयति— **पृथिवी चेत्यादिना** । अत्र पृथिवीमात्राशब्देन पुराणेषु गन्धतन्मात्रशब्दाभिलप्या पृथिवीपूर्वावस्थोच्यते । एवमुत्तरेष्वपि मात्राशब्देषु द्रष्टव्यम् ॥ ८ ॥

आकाशमात्रा चेत्यन्तेन सकारणानि भूतान्युक्तानि । स्पर्शयितव्यं चेत्यन्तेन सविषयाणि ज्ञानेन्द्रियाणि रस्यतेऽनेनेति रसः रसना । गन्तव्यं चेत्यन्तेन कर्मेन्द्रियाणि । आनन्दयितव्यं जीवात्मस्वरूपं उत्पादयितव्य आनन्दो वा । चेतयितव्यं चेत्यन्तेन विविधाकारं मनः । अहङ्कारः अहमभिमानहेतुः । अहङ्कर्तव्यं तद्विषयः यद्वा सोऽभिमान एव । तेजश्चेति आत्मज्योतिषः प्रभास्थानापन्नं यद् धर्मभूतज्ञानं तदभिसंहितमिति भाति । अन्यस्येह सङ्गत्यभावात् । विधारयितव्यं शरीरम् । विधारयितव्यं चेत्येतत् सर्वं पर आत्मनि सम्प्रतिष्ठत इति पूर्वेणान्वयः । अत्र चक्षुरादीनां सम्प्रतिष्ठा संश्लेषविशेषः । द्रष्टव्यादीनां तु अत्यन्तमगृह्यमाणत्वमेवेति बोध्यम् । अथवा तत्स्वरूपमपि तदाश्रितमेवेति ।

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षर आत्मनि संप्रतिष्ठते ॥ ९ ॥**

**एष हि द्रष्टेत्यादि** । चेतनाचेतनरूपः कर्तृकरणकर्मरूपः सर्वोऽपि प्रपञ्चस्तदाश्रित इति भावः । अत्र बोद्धा कर्ता विज्ञानात्मेति निर्देशादात्मनो ज्ञातृत्वमेव न ज्ञानरूपत्वमिति वदन्तस्तार्किकाश्च[1] ज्ञानत्वमेव न ज्ञातृत्वमिति वदन्तो मृषावादिनश्च निरस्ता भवन्ति ॥ ९ ॥

शरीरेन्द्रियमनःप्राणानां सम्प्रतिष्ठायामभिहितायां अथ जीवात्मनः सम्प्रतिष्ठा वक्तव्या उच्यते । तत्र कुतः स द्रष्टा स्प्रष्टेति बह्वाकारो निर्दिश्यत इति शङ्कां परिहरन्नाह—**चेतनाचेतनेति** । द्रष्टेत्यादिना बाह्यज्ञानेन्द्रियकरणकत्वमुक्तम् । मन्ता बोद्धा कर्तेति मनःकरणकत्वम् । पुरुष इति भूतारब्धशरीरविशिष्टत्वम् । विज्ञानेति ज्ञातृत्वम् । तथाच न परमुक्तरीत्या पृथिव्यादीनि, तैरुपकरणैर्य उपक्रियते स करणाधिप आत्माऽपि तस्मिन् पर आत्मनि सम्प्रतिष्ठत इत्यविशेषेण सर्वाश्रयत्वं वक्तुमेवं विशिष्टनिर्देश इति भावः । 'एष विज्ञानात्मा पुरुषः पर आत्मनि सम्प्रतिष्ठते' इत्येकवाक्यतामकृत्वा 'एष हि विज्ञानात्मा पुरुषः अस्ति । स पर आत्मनि...' इति पृथग्वाक्यार्थतया निर्देशोऽपि तस्येतरेभ्यः प्राधान्यं व्यज्य ततोऽपि प्राधान्यं परमात्मनो व्यञ्जयितुमेवेति ज्ञेयम् ।

1. आ. 'भेदवादिनश्च' (?) । ग्र. चकारो नास्ति ।

**परमेवाक्षरं प्रतिपद्यते। स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञःसर्वी[1] भवति। तदेष श्लोकः ॥ १० ॥**

**स यो ह वै तदिति** । अत्र[2] च्छायाशब्देन ज्ञानसंकोचकं कर्मोच्यते । अच्छायं अपापमित्यर्थः । अत एवाशरीरं, अलोहितं रूपादिशून्यं, शुभ्रं स्वप्रकाशं, अक्षरं क्षरणशून्यं, परमात्मानं वेदयते जानाति, सः हे सोम्य प्रियदर्शन (परमेवाक्षरं ब्रह्म वासुदेवं प्रतिपद्य) सर्वज्ञो भवति । सर्वी[1] भवति सर्वकामयुक्तो भवति । **तदेष श्लोक इति** । तत् ब्रह्माभिमुखीकृत्यैष श्लोक इत्यर्थः ॥ १० ॥

जीवस्य परमात्मना सम्बन्धः नार्थान्तरसाधारणः । अपि तु 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तः' इति दृष्टान्तनिरूप्यविलक्षणाकारः परिष्वङ्ग इति बोधयन्ती श्रुतिरुपरि ब्रवीति— **परमेवाक्षरं प्रतिपद्यत** इति । एतद्विवरणपरं भाष्यं बहुषु कोशेषु न दृश्यते । क्वचित् अनन्तरवाक्यविवरणाभ्यन्तरे 'परमेवाक्षरं ब्रह्म वासुदेवं प्रतिपद्य' इति पठ्यते । तत्रानन्वितमिदमिह अपकृष्य योज्यम् । अन्ते प्रतिपद्यत इत्याख्याततया परिणमयितव्यं च । **सर्वीति** । सर्वमस्यास्तीति सर्वीति इनिप्रत्ययान्त शब्द इति भावः । कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति प्रश्नस्य समाधाने पूर्वखण्डेनैव कार्त्स्न्येनोक्तेऽपि प्रसङ्गात् श्रोतॄणां परे आत्मनि अत्यन्तादरजननाय परमपुरुषार्थसाधनज्ञानत्वेन तस्य स्तुतिः क्रियत इति पूर्ववद् द्रष्टव्यमिति इह भाष्यकृदाशयोऽवधातव्यः ।

**ब्रह्मेति** । सर्वसम्प्रतिष्ठाभूतं ब्रह्मेति हृदयम् ।

**विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठन्ति यत्र ।**
**[3]शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञःसर्वमेवाविवेशेति॥ ११ ॥**

**विज्ञानात्मेति** । सर्वैर्देवैः वागादीन्द्रियैः सह मुख्यप्राणः भूतानि महाभूतानि च जीवात्मा च यत्र प्रतितिष्ठन्ति तादृशं शुभ्रं अक्षरं स्वप्रकाशमक्षरं[4] परमात्मानं यो जानाति स सर्वज्ञः सर्वमपि कामजातं[5] आविवेश आविशति ।

---

1. पू. ना. 'सर्वः' । 2. आ. ना. पू. 'अत्र' नास्ति । 3. 'तदक्षर'मित्यन्यत्र पाठः । 4. ग्र. पू. 'स्वप्रकाशमक्षरं' नास्ति । 5. ग्र. 'कार्यजातम्' ।

"सर्वेषु लोकेषु कामचारो भवती" ति श्रुत्युक्तरीत्या काम्यमानसर्वलोकसञ्चारी भवतीत्यर्थः ॥ ११ ॥

इति प्रश्नोपनिषद्भाष्ये चतुर्थः प्रश्नः

पर्यवसानगत्या सर्वो भवति सर्वमेवाविशेषेणानयोरैकार्थ्यं बोध्यम् ।

इति चतुर्थप्रश्नटिप्पणी.

---

## अथ पञ्चमः प्रश्नः

**हरिः ओम् । अथ हैनं शैब्यःसत्यकामः पप्रच्छ । स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति ॥ १ ॥**

**अथ हैनं शैब्य इति** । स्पष्टोऽर्थः । हवा इति प्रसिद्ध्यतिशये । तदित्येतदव्ययम्[1] । स [2]इत्येतदधिकारिसामान्यपरम् । अयमर्थः[3] । हे भगवन् पूजार्ह यः अधिकारी मनुष्याणां मध्ये मरणान्तमोङ्कारमभिध्यायति[4] स कतमं लोकं तेन ओङ्कारेण प्राप्नोतीत्यर्थः । वावशब्दोऽवधारणे । प्रसिद्धौ वा ॥ १ ॥

**अथ पञ्चमः प्रश्नः**

**अव्ययमिति** । तमिति ओङ्कारविशेषणतया योज्यमित्याशयः । **अधिकारिसामान्येति** । यो ह वा इति श्रुतस्य यच्छब्दस्य प्रतिसम्बन्धी तच्छब्दः कतमं वाव स तेनेत्युत्तरत्र श्रूयते । अतोऽस्य तच्छब्दस्यान्योऽर्थो वाच्यः । तेन च प्रकृतानुगुणेन भाव्यम् । तादृशश्चार्थः अधिकारीत्ययमेवेति भावः । 'अस्ति हि सः तादृशः कश्चित् मनुष्येषु यो मरणान्तमोङ्कारमभिध्यायीत । स कतमं तेन लोकं जयतीति च योजनया प्रथमतच्छब्दस्यार्थवत्ता सुवचेति ज्ञेयम् । **अवधारण** इति । प्राप्या हि लोका बहवः सन्ति । तत्र कमेव प्राप्नोतीति प्रश्न इति । **प्रसिद्धाविति** । कञ्चन लोकं प्राप्नोतीति स्थितमेतत् । सर्वविदितमिति यावत् । क स लोक इति तु प्रकृते जिज्ञासेत इति ।

प्रश्नचतुष्टयेन तत्त्वनिर्णयः कृतः । इह हितपुरुषार्थोपदेश इति सङ्गतिर्बोध्या ।

---

1. प्र. इदं वाक्यं नास्ति । पू. 'तदव्ययम्'. 2. प्र. 'स इत्यधि 3. प्र. 'अयमर्थः' नास्ति । 4. प्र. ध्यायति ।

**तस्मै स होवाच । एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कार-स्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥**

**तस्मै स होवाचेति** । स्पष्टोऽर्थः । (एतद्वा इति) । हे सत्यकाम एतदेव परञ्चापरञ्च ब्रह्म, उभयवाचकमित्यर्थः । वाच्यवाचकभावनिबंधनं सामानाधिकरण्य-मितीक्षतिकर्माधिकरणे व्यासार्यैर्व्याख्यातम्[1] । किं तदित्यत्राह— **यदोङ्कार** इति । **तस्मादिति** । तस्मादुपासक एतेनैव ओंकाररूपेण मार्गेण एकतरं परमपरं वा ब्रह्मान्वेति उपास्त इत्यर्थः ॥ २ ॥

**उपास्त इत्यर्थ** इति । यद्यपि कं लोकं प्राप्नोतीति प्रश्नानुगुण्येन एकतरमन्वेति अपरब्रह्मलोकं वा परब्रह्मलोकं वा प्राप्नोतीत्येवार्थो वक्तुमुचित इति भाति तथापि ओङ्कारब्रह्मणोः सामानाधिकरण्येन वाच्यवाचकभावस्य प्रतीतत्वात् वाचककरणिका वाच्यकर्मिका क्रिया उपासनमेव भवितुमर्हतीति औचित्यात् प्रतीतेरेवमर्थ उक्तः । अन्वित्युपसर्गस्वारस्याच्च । प्राप्तिविवक्षायां हि एकतरमेतीत्येवाश्रोष्यत । प्रश्नस्य साक्षादुत्तरं तु 'मनुष्यलोकं, सोमलोकं, ब्रह्मलोक' मित्युपरिष्टात् तत्र तत्रेति ध्येयम् ।

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्या-मभिसंपद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥**

**स यद्येकमात्रमिति** । सः उपासकः यद्येकमात्रं ह्रस्वं प्रणवमपरब्रह्मवाचक-मभिध्यायीत अपरब्रह्मवाचकेन ह्रस्वेन प्रणवेन योऽपरं ब्रह्मोपास्ते, सः तेनैव एकमात्रोङ्कारकरणकापरब्रह्मध्यानेनैव संवेदितः लब्धसत्ताकः जगत्यां भुवि अभि अभ्यर्हितः श्रेष्ठःसंपद्यते । तं ऋङ्मन्त्रा मनुष्यलोकं प्रापयन्ति । सः मनुष्यलोकं नीतः तपसा अनशनादिना ब्रह्मचर्येण मैथुनवर्जनेन श्रद्धया आस्तिक्यबुद्ध्या यदि संपन्नो भवति तदा महिमानं श्रेयस्साधकं ब्रह्मोपासनमनुतिष्ठतीत्यर्थः । न चैवो ह्रस्वाभावात् कथमोङ्कारस्य ह्रस्वत्वमिति शङ्कनीयम् । न्यूङ्खे[2] ह्रस्वस्य ओङ्कारस्य दर्शनात् ॥ ३ ॥

---

1. आ. ना. पू. "...सामानाधिकरण्यम् । तथैव व्यासार्यैरीक्षतिकर्माधिकरणे व्याख्याततत्वात् । 2. म. पू. 'लोके' ।

**अपरं ब्रह्मोपास्त** इति । वाचकाभिध्यानं हि वाच्याभिध्यानायैव । अतोऽस्मिन्नेवार्थे पर्यवसानमिति भावः । अपरं ब्रह्म स्वस्वरूपं वा पृथिवीस्थानकदेवताविशेषं वा । संवेदित इति विद लाभ इत्येतस्मात् णिचि कर्मणि क्तप्रत्यये रूपम् । अत आह— **लब्धसत्ताक** इति **भुवीति** । येन शरीरेण विशिष्टः ध्यानं करोति तस्मिन् शरीरे वर्तमान एव मनुष्याणां मध्ये श्रेष्ठो भवति, ध्यानमहिम्ना । उत्तममनुष्यजन्मपरिग्रहानुकूलमवस्थाविशेषं प्राप्नोतीति यावत् । मरणानन्तरं ह्रस्वोङ्कारसम्बन्धिन्य ऋचः तं पुनर्मनुष्यलोकं प्रापयन्ति । तत्र साक्षात् मोक्षोपायभूतं विद्याविशेषं अविकलमनुष्ठाय मुक्तो भवतीत्यभिप्रायः ।

**अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । स[1] सोमलोकम्[2] । स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥**

अथ **यदि द्विमात्रेणेति** । द्विमात्रेणापरब्रह्मवाचकेन प्रणवेन यस्य मनस्यपरब्रह्मध्यानं संपद्यते, सः अन्तरिक्षाश्रितं सोमलोकं द्विमात्रोपासकः पुमान् यजुर्मन्त्रैरुन्नीयते । अत्रान्तरिक्षसोमलोकशब्दः ऊर्ध्वलोकमात्रो[3]पलक्षकः आमुष्मिकमात्रपरः[4] इतीक्षतिकर्माधिकरणभाष्ये समर्थितम् । [5]आमुष्मिकैश्वर्यमनुभूय तत्पुण्यावसाने पुनरावर्तते ॥ ४ ॥

मनसि किं सम्पद्यत इति जिज्ञासायां अर्थलभ्यं पूरयति—**अपरब्रह्मध्यानमिति** । नन्वत्र सम्पद्यतेः ध्यानं कर्तृ इत्येतदनुपपन्नम् । पूर्ववाक्ये यथा जगत्यामभिसम्पद्यत इति उपासितुः पुरुषस्यैव प्रायणात्पूर्वभावि किञ्चिदवान्तरफलमुक्तम्; उत्तरवाक्ये च स तेजसि सूर्ये सम्पन्न इति किञ्चिदुच्यते तथाऽत्रापि उपासितुरेव मनसि सम्पत्तिरुच्यत इति वाच्यम् । मनसि सम्पत्तिर्नाम मनस्सम्बन्धिलोकप्राप्त्यनुगुणोऽवस्थाविशेषः । तस्मादुपासितैव सम्पद्यतेः कर्ता । वाक्ययोजना चैवम्— अथ यदि द्विमात्रेणाभिध्यायीत स तेन मनसि सम्पद्यत इति— इति चेत् काममेवमस्तु । काऽस्माकं हानिः । कुतो नैवं व्याख्यातमिति चेत् श्रोतुर्बुद्धिक्लेशपरिहारायैव । एवं व्याख्यातव्ये अन्यथा कृतं व्याख्यानं सावद्यमिति चेत् तन्न । न हि सर्वात्मना पूर्ववाक्यस्य उत्तरवाक्यस्य वा सारूप्यमत्रास्ति येन तथैव व्याख्यातव्यमिति निर्बन्ध्ये-

---

1. आ. ना. 'स' नास्ति । 2. आ. पू. 'देवलोकम्' । 3. ग्र. पू. 'उर्ध्वमात्र'... । 4. आ. ना. पू. ''आमुष्मिकमात्रपरः । अत एवेक्षतिकर्माधिकरणभाष्ये यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्य एकमात्रं प्रणवमुपासीनानां ऐहिकं मनुष्यलोकावाप्तिं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकं अन्तरिक्षशब्दोपलक्षितं फलं अभिधायेत्युक्तम्''। 5. ग्र. पू. 'अमुष्मिन्नैश्वर्यम्'

महि । पूर्वत्र तावत् स यद्येकमात्रमभिध्यायीतेति प्रणवस्य कर्मत्वमुक्तम् । अत्र तु द्विमात्रेणेति करणत्वम् । उत्तरत्र परं पुरुषमिति कर्मकारकं श्रुत्या निर्दिष्टम् । अत्र तु न किञ्चित् । तस्मादुभयवैलक्षण्यात् स्थितमनतिक्लेशेन योजितमिति ।

**यः पुनरेतं त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः ॥ ५ ॥**

**यः पुनरेतमिति** । यस्तु एकमात्र[1]द्विमात्रत्वदशायामर्वाचीनफलसाधनेनैतेनैवाक्षरेण परमात्मानमभिध्यायति आभिमुख्येन ध्यायति[2] निरन्तरं ध्यायतीत्यर्थः । स उपासकस्तेजोमंडले सूर्ये संगतःसन्, उदरमेव पादो यस्य सः पादोदरः, सर्प इति यावत् । यथा सर्पो जीर्णत्वचा विनिर्मुक्तो भवति, एवं पाप्मना विनिर्मुक्तःसन् भगवल्लोकं वैकुण्ठं सामभिः गीतिप्रधानैर्मन्त्रैः उन्नीयते । अत्र व्यासार्यैः स पाप्मना विनिर्मुक्त इति तच्छब्दान्तरश्रवणात् ससामभिरित्यैकपद्यमाश्रित्य सामगानसहितैरिति वा सान्त्ववचनसहितैः पुरुषैरिति वा अर्थ इतीक्षतिकर्माधिकरणे व्याख्यातम्[3] । **स एतस्मादि**ति । कर्मनिमित्तदेहिन एव जीवघनशब्दार्थतया ईक्षतिकर्माधिकरणभाष्ये वर्णितत्वात्[4] जीवघनशब्देन [5]संसारिमण्डलमुच्यते । "मूर्तौ घन" इति काठिन्यशब्दितमूर्तौ घनशब्दस्य निपातितत्वात् देहद्वारत्वादात्मनि काठिन्यस्य घनशब्दो देहिपर एव । तस्मात्परः परिशुद्धात्मा । तस्मादपि परभूतं पुरिशयं "पूःप्राणिनःसर्व एव गुहाशयस्य"ति सर्वेषु प्राणिषु[6] अन्तरात्मतया शयानं "भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने" इति निरुपाधिकपुरुषशब्दवाच्यं भगवन्तं वासुदेवमीक्षत इत्यर्थः । अत

1. आ· 'एकमात्रत्व' 2. आ· ना. 'आभिमुख्येन ध्यायति' नास्ति । 3. आ. ना. पू. 'अर्थ इति वर्णितम्' । 4. आ. ना. पू. "यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते । चतुर्मुखस्यापि तच्छ्रूयते । यो ब्रह्माणं विदधाति पूर्वमिति, इत्यादिभाष्योक्तेः" । 5. प्र. पू. 'संसार' । 6. आ. ना. 'आत्मसु' ।

एव "ससामभिरुन्नीयते ब्रह्मलोक" मित्यत्र ब्रह्मलोकशब्दस्य सत्यलोकपरत्वशंका व्युदस्ता[1] । तद्गतानां परवासुदेवेक्षणासंभवादिति द्रष्टव्यम् । **तदेताविति** । तत् ओंकारध्यानमधिकृत्य वक्ष्यमाणश्लोकौ प्रवृत्तावित्यर्थः ॥ ५ ॥

**आभिमुख्येनेति** । इदं इतः पूर्वप्रयोगेष्वप्यनुसन्धेयम् । **तेजसीति** । तेजोरूप-सूर्यप्राप्त्यनुगुणेन अवस्थाविशेषेण सम्पन्नो भवतीत्यर्थः । कोऽसाववस्थाविशेष इति चेत् अत्रोक्तं **यथा पादोदर** इत्यादि । पूर्वोत्तराघविनाशाश्लेषवत्त्वमेव तदित्युक्तं भवति । यद्यपि भाष्ये प्रायणानन्तरभाविसूर्यप्राप्त्यादिपरतयेदं प्रकरणं नीतमिति भाति तथापि इदमप्याभिप्रायिकतया द्रष्टव्यम् । **तच्छब्दान्तरेति** । एतेन एकवाक्यतापक्षमाश्रित्येदमिति स्पष्टम् । तेन सूर्ये सम्पन्नो भवति, पाप्मना विनिर्मुक्तो भवति, इति पृथग्वाक्यत्वे सः सामभिरिति पृथक्पदत्वमेवेति ज्ञापितम् । तदित्यव्ययं लुप्तसप्तमीकम् । तत्रेत्यर्थः । तद्विवृतं ओङ्कारध्यानमधिकृत्येति । त्रिमात्र एवोङ्कार इह विवक्षितः ।

**तिस्रो मात्रा मृत्युमन्त्यः प्रयुक्ता अन्योन्यसक्ता अनविप्र-युक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥**

**तिस्रो मात्रा इति** । अविप्रयुक्ता न भवन्तीत्यनविप्रयुक्ताः । विप्रयुक्ता इति यावत् । अत्यन्तद्रुतोच्चारणेन अन्योन्यसक्ततया, अतिविप्रकृष्टकालतया अत्य-न्तविप्रयुक्ततया वा प्रयुक्तास्तिस्रो मात्राः मृत्युमन्त्यः मृत्युप्रदाः । अनर्थावहा इति यावत् । मृत्युमत्य इति पाठेऽपि स एवार्थः । यज्ञादिका बाह्याः क्रियाः । आन्तराः मानसक्रियाः । मध्यमा वाचिकजपरूपाः । आसु क्रियासु त्रिसृषु मात्रासु सम्यक् अत्यन्तसंयोगविप्रयोगमन्तरेण प्रयुक्तासु सतीषु ज्ञः तत्प्रयोगाभिज्ञः पुमान् न कम्पते फलान्न च्यवत इत्यर्थः ॥ ६ ॥

**तिस्र** इति । याभिर्मात्राभिः प्रणवस्य त्रिमात्रत्वं भवति तास्तिस्रो मात्रा इत्यर्थः । अनेन मन्त्रेण प्रणवोच्चारणे अतिद्रुतत्वातिमन्दत्ववर्जनरूपमङ्गं विहितमिति बोध्यम् ।

---

1. अ. 'शङ्काऽप्युदस्ता'। आ. ना. पू. 'चतुर्मुखलोकपरत्वशङ्का व्युदस्ता । चतुर्मुखलोकगतानाम्"।

ऋग्भिरेतं यजुर्भिरन्तरिक्षं [1]ससामभिर्यत्तत्कवयो वेदयन्ते । तमोङ्कारेणैवा[2]यतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति[3] ॥ ७ ॥

इति पञ्चमः प्रश्नः ।

**ऋग्भिरेतमिति** । सः विद्वान् ऋग्भिः एतं लोकं, यजुर्भिरन्तरिक्षं, सामभिर्यत्तत्कवयो वेदयन्ते कवयः क्रान्तदर्शिनः "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इत्युक्तरीत्या सूरयो यं लोकं पश्यन्ति तं, ओङ्कारेणैव मार्गेणान्वेति । गत्वा च शान्तं ऊर्मिषट्करहितं, अजरं जरामरणशून्यं, अभयं अकुतोभयं, परं सर्वकारणत्वेन सर्वोत्कृष्टं ब्रह्म च प्राप्नोतीत्यर्थः[4] ॥ ७ ॥

अस्य सन्दर्भस्य परमात्मपरत्वं "ईक्षतिकर्म व्यपदेशात्स" इति सूत्रकारैः प्रत्यपादि[5] । तदर्थस्तु तद्भाष्ये इत्थमुक्तः[6] । "आथर्वणिकाःसत्यकामप्रश्नेऽधीयते "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव(?) स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति । अत्र ध्यायतीक्षतिशब्दावेकविषयौ । ध्यानफलत्वादीक्षणस्य । "यथाक्रतुरस्मिन् लोके पुरुष" इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात् । परमपुरुषमित्युभयत्र कर्मभूतस्यार्थस्य

---

1. आ. ना. पू. 'स' नास्ति। 2. आ. ना. 'अयनेनान्वेति'। 3. ना. 'परं परायणं चेति'। 4. आ. ना. "ऋग्भिरेतं ऋग्भिर्मनुष्यलोकमित्यर्थः। यत् तत् कवयो वेदयन्ते। कवयः क्रान्तदर्शिनः। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्युक्तरीत्या सूरयो यं लोकं पश्यन्ति तमोङ्कारेणैव मार्गेणान्वेति। गत्वा च शान्तमूर्मिषट्करहितं जरामरणशून्यं अकुतोभयं सर्वकारणत्वेन सर्वोत्कृष्टं ब्रह्म च प्राप्नोतीत्यर्थः। पू. कवय इत्यत आरभ्यैव वर्तते। 5. आ ना. "...परत्वं भगवता बादरायणेन प्रतिपादितम्।' 6. आ. ना. अनयोरुभयोरपि भाष्यग्रन्थस्थाने तदर्थसङ्ग्रहमात्रमेवं दृश्यते। —'अत्र हि पृथिव्यन्तरिक्षलोकप्रायपाठात् ब्रह्मलोकशब्दस्य चतुर्मुख एव सम्भवात् चतुर्मुखः। इति पूर्वपक्षे प्राप्ते 'ईक्षतिकर्म व्यपदेशात् स' इति सूत्रेण सिद्धान्तितम्। पुरिशयं पुरुषमीक्षत इति ईक्षतिकर्मतया व्यपदिश्यमानः परमात्मा। शान्तत्वाजरत्वामृतत्वादिपरमात्मासाधारणधर्मव्यपदेशादित्यर्थ इति।

प्रत्यभिज्ञानाच्च । तत्र संशय्यते— किमिह परं पुरुषमिति निर्दिष्टो जीवसमष्टि-रूपोऽण्डाधिपतिश्चतुर्मुखः, उत सर्वेश्वरः पुरुषोत्तम इति । किं युक्तम् ? समष्टि-क्षेत्रज्ञ इति । कुतः ? "स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयती" ति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्यलोक-प्राप्तिमभिधाय द्विमात्रमुपासीनस्य अन्तरिक्षलोकप्राप्तिमभिधाय त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते । तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपश्चतुर्मुख एव । "एतस्माज्जीव-घनात्परात्पर" मिति च देहेन्द्रियादिभ्यः परादेहेन्द्रियादिभिःसह घनीभूताज्जीव-व्यष्टिपुरुषात् ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते । अतोऽत्र निर्दिश्यमानः परः पुरुषः समष्टिपुरुषश्चतुर्मुख एव । एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथाकथञ्चिन्नेतव्या इति प्राप्ते प्रचक्ष्महे— "ईक्षतिकर्म व्यपदेशात्स" इति । ईक्षतिकर्म सः परमात्मा । कुतः ? व्यपदेशात् । व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन । तथा हि । ईक्षतिकर्मविषयतयोदाहृते श्लोके "तमोंकारेणैवायने-नान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चे" ति परं शान्तमजरमभय-ममृतमिति हि परमात्मन एवैतद्रूपम् । "एतदभयमेतदमृतमेतद्ब्रह्मे" त्येवमादिश्रु तिभ्यः । "एतस्माज्जीवघनात्परात्पर" मिति च परमात्मन एव व्यपदेशः, न चतु-र्मुखस्य । तस्यापि जीवघनशब्दगृहीतत्वात् । यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते । चतुर्मुखस्यापि तच्छ्रूयते । "यो ब्रह्माणं विदधाति पूर्व" मित्यादौ । यत्पुनरुक्तमन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयते ; अतस्तत्रस्थश्चतुर्मुख इति । तदयुक्तम् । "यत्तच्छान्तमजरममृत-मभय" मित्यादिना ईक्षतिकर्मणः परमात्मत्वे निश्चिते सतीक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति । किञ्च "यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तःससामभिरुन्नीयते ब्रह्मलोक" मिति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम् । अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते "यत्तत्कवयो वेदयन्ते" इति । कवयः सूरयः । सूरिभिर्दृश्यञ्च वैष्णवं पदमेव । "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय"

इत्येवमादिभ्यः । न चान्तरिक्षात्परश्चतुर्मुखलोकः । मध्ये स्वर्गलोकादीनां बहूनां सद्भावात् । अतः "एतद्वै सत्यकाम परश्चापरश्च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति" इति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्य एकमात्रं प्रणवमुपासीननामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलञ्चाभिधाय त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परमपुरुषं ध्यायतां परमेव ब्रह्म प्राप्यमनयोपदिशतीति सर्वं समञ्जसम् । अत ईक्षतिकर्म परमात्मेति ॥

इति प्रश्नोपनिषद्भाष्ये पञ्चमः प्रश्नः

ननु त्रिमात्रप्रणवप्रकरणे अर्वाचीनफलप्रतिपादनमसङ्गतमिति चेन्न । त्रिमात्रत्वप्रशंसापरत्वात् तस्य । एकमात्रत्वेन द्विमात्रत्वेन च अस्य लोकस्य अन्तरिक्षस्य च यः प्रापकः स एव प्रणवः त्रिमात्रत्वेन तदुभयविलक्षणपरवासुदेवलोकप्रापक इति त्रिमात्रत्वं अतिप्रशस्तमिति । अत एव त्रिमात्रसाध्यफलस्यैव यत्तत् कवय इति, यत् तच्छान्तमिति च वैलक्षण्यातिशयो वर्णित इति विभाव्यम् । गत्वा चेति । अन्वेतीत्यस्य अनु मरणानन्तरं एति प्राप्नोतीत्यर्थः । तत्र उपसर्गार्थस्यानतिप्रयोजनत्वात् तमुपेक्ष्य गमनमात्रमनूदितम् । इदमुपसर्गस्य मन्दफलत्वमगत्या अङ्गीकृतम् । पूर्वं तु सार्थक्ये सम्भवति तत्परित्यागायोगात् अनुवृत्तमयनं गमनं वेदनम्, उपासनमिति व्याख्यातम् ।

इति पञ्चमप्रश्नटिप्पणी.

## अथ षष्ठः प्रश्नः

हरिः ओम् ॥ अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं[1] प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं[2] नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति समूलो [3]वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥

अथ हैनं सुकेशेत्यादि । स्पष्टोऽर्थः । (भगवन्निति) । हे भगवन् हिरण्यनाभनामा कोसलदेशाधिपती राजपुत्रो मत्समीपमागत्य इमं वक्ष्यमाणं प्रश्नं

---

1. आ. ना. पू. 'एनं' । 2. ग्र. 'अत्रवम्' । 3. आ ना. पू. 'समूलो ह' ।

कृतवान्। किमिति[1]। (षोडशकलमिति)। हे भारद्वाजेति मां संबोध्याह[2]—'प्राणाद्या नामान्ताःषोडश कलाः यस्य स षोडशकलः। तं पुरुषं जानासि किमिती' त्यर्थः। तं राजकुमारमहमेवमुक्तवान्। त्वदुक्तं पुरुषमहं न जानामि। यद्यहं जानीयां केन हेतुना ते राजकुमाराय योग्याय शिष्याय न कथयिष्यामीति। योऽनृतं ब्रूते सः मूलेन सह सर्वतः शुष्यति। श्रेयोहेतुभूतं पुण्यं सर्वमेव[3] नश्यतीत्यर्थः। अतो मदुक्ते त्वया अनृतशंका न कार्येति भावः। सः राजकुमारः तूष्णीं प्रश्नस्य प्रजोजनलेशं किमपि (?) मत्तोऽलब्ध्वैव रथमारुह्य[4] प्रवव्राज प्रकर्षेण गतः। अनेन स्व[5]लज्जा सूचिता। रथेन प्रवव्राजेत्यनेन तस्य प्रभुत्वं सूचितं भवति। तमेव षोडशकलं पुरुषं पृच्छामि त्वां क्वासाविति। क्व प्रदेशे तिष्ठतीत्यर्थः। अत्राधारभूत-देशप्रश्नद्वारा जीवो वा परमात्मा वेति निर्णयार्थोऽयं प्रश्न इति द्रष्टव्यम्॥ १॥

अथ षष्ठः प्रश्नः

**स्वलज्जेति**। ऋषिकुलभवस्य सर्वस्य षोडशकलेन पुरुषेण अवश्यं विदितेन भाव्यमिति राजकुमारस्य निश्चयः। तेन स राजकुमारः तं पुरुषं जिज्ञासमानः इमं भारद्वाज-मुपेत्य पप्रच्छ। अयं प्रत्युवाच नाहं तं वेदेति। अत्र राजकुमारस्य विश्वासो नाभूत्। जानन्नेव अपह्नुत इति मेने। अत उपदेशाय निर्बबन्ध। भारद्वाजः परमार्थत एव तं पुरुषमजानन् महत् सङ्कटमनुभूय अन्ते आत्मानं शपन्निव साभिषङ्गमुवाच समूलो वा एष इत्यादि। ततः परं भारद्वाजो वस्तुतो न जानातीति जातप्रत्ययोऽपि राजकुमारः तदज्ञानेन तस्मिन् अवज्ञामिव दर्शयन् आमन्त्रणमप्यकृत्वा झटिति ततोऽगगच्छत्। स्वप्रत्यक्षमपि राजकुमारप्रव्रजनं भारद्वाजः परोक्षमिव भाषते। तथा त्वरितं भारद्वाजाश्रमात् राजकुमारः प्रतिन्यवर्तत। अवज्ञाकार्यं चैतत्। तेनास्य लज्जेति! **रथमारुह्येति**। यदि पद्भ्यां गतः स्यात् किञ्चिद् दूरमनुगम्य सम्भाव्य स्वदशामावेद्य स्वस्मिन् तस्यावज्ञां परिहर्तुं कश्चिदवकाशो लब्धः स्यादपि। तत्तु नाभूत्। रथमारुह्य शीघ्रगैरुत्तमैरश्वैः निमेषमात्रेण चक्षुर्गोचरमतीत्य बहुदूरमध्वानं गत इति।

**तमेवेति**। यं राजकुमारोऽपृच्छत्, यस्याज्ञानात् एवमहं तस्य अवमन्तव्य आसं तमेवे-त्यर्थः। स्वकीयां परमामार्तिं प्रदर्श्य पिप्पलादस्य महर्षेः स्वविषये कृपातिशयमुत्पादयितुमिच्छन् भारद्वाजः एवं वृत्तं कथयामासेति ज्ञेयम्।

**आधारभूतेति**। 'षोडशकलं पुरुषं वेत्थ' इति राज्ञः प्रश्नः पुरुषविषयः। तद्विषय एव स्वप्रश्नोऽपीति भारद्वाज आह तं त्वा पृच्छामीति। एवं सति 'कोऽसौ पुरुषः' इत्येवंरूपेण भाव्यं प्रश्नेन, न तु क्वासावित्येवंरूपेण। तस्मादसङ्गतमिदमिति न शङ्कनीयम्। तस्य स्थानं किम्? किंस्थानकः सः? इति पुरुषप्रश्न एव पर्यवसानादिति भावः।

---

1. प्र. 'किमिति' नास्ति। 2. प्र. पू. 'आह' नास्ति'। 3. आ. ना.पू. 'सवासनं'। 4. प्र. पू. स इत्यादि आरुह्येत्यन्तं नास्ति। 5. प्र. 'स्वल्प'।

जीवो वेति। परात्परं पुरिशयं पुरुषमीक्षत इति पूर्वत्र पुरुषः प्रस्तुतः। किं स एवायं राजकुमारेण पृष्टः षोडशकलः पुरुषः? उत जीवः? यदि स एव तस्य निष्कलत्वं कथं ब्रह्मवादिभिरुच्यते। यदि जीवः तर्हि कथं सर्वाधारता परमपुरुषस्येत्येवमादिविकल्पपरिहारेण निर्णयार्थ इति।

एतेन प्राप्यप्रापकभूतस्य परमपुरुषस्य स्वरूपनिरूपणमेतत्प्रश्नार्थ इति सूचितम्।

**तस्मै स होवाच। इहैवान्तश्शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्तीति ॥ २ ॥**

तस्मै स हेति। स्पष्टोऽर्थः। इहैवान्तश्शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडश कलाः प्रभवन्तीति। सौम्य प्रियदर्शन, स पुरुषः[1] इहैवान्तश्शरीरे, वर्तत इति शेषः। अनेन शरीरपरिच्छिन्नप्रदेशमात्राधारत्वोक्त्या जीव इत्युत्तरमुक्तं भवति। ननु जीवस्यैव कथं षोडशकलत्वं षोडशकलाधारत्वतत्स्रष्टृत्वयोः परमात्मन्येव पुष्कलत्वादित्याशंक्याह— **यस्मिन्निति**। यस्मिन् पुरुषे एताः वक्ष्यमाणाः प्राणाद्या नामान्ताः षोडश कलाः स्वसंसर्गप्रयुक्तसुखदुःखादिभोगाख्यमुपकारं कर्तुं प्रभवन्ति समर्था भवन्तीत्यर्थः। ततश्च षोडशकलाभोक्तृत्वमेव षोडशकलत्वम्। तच्च जीवस्यैवेति भावः ॥ २ ॥

**स ईक्षाञ्चक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥**

ननु षोडशकलासर्ग[2]हेतुत्वे जीवपरमात्मनोरविशिष्टे सति[3] तद्भोक्तृत्वं जीवस्यैव न परमात्मन इत्यत्र किन्नियामकमित्याह— **स ईक्षाञ्चक्र इत्यादि**। [4]इदं वाक्यं जीवाभिसंधिप्रकारप्रदर्शनपरम्। "सोऽध्यक्षे तदुपगमादिभ्य" इति भाष्ये तथोक्तत्वात्। मदुत्क्रान्तिप्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठः को वेति पर्यालोचितवानित्यर्थः।

---

1. प्र. पू. "सौम्य...पुरुषः' नास्ति। 2. ना. पू. 'संसर्ग' 3. प्र. पू. 'सति' नास्ति। 4. ना. पू. "सोऽध्यक्षे तदुपगमादिभ्य इति भाष्ये 'प्रतिष्ठा च जीवेन सह श्रूयते कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति' इत्युक्तत्वादिदं वाक्यं जीवाभिसन्धिप्रकारप्रदर्शनपरम्"।

ततश्च स्वोपकाराभिसंधिपूर्वकं जीवस्य प्राणादिस्रष्टृत्वात् तद्भोक्तृत्वं संभवति । परमात्मनस्तु "न च मां तानि कर्माणि निबध्नन्ति धनञ्जय । उदासीनवदासीन-मसक्तं तेषु कर्मसु ।। न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा" इत्युक्तरीत्या स्वोपकाराभिसंधिपूर्वकस्रष्टृत्वाभावान्न तस्य षोडशकलाभोक्तृत्वमिति भावः ।। ३ ।।

**मदुत्क्रान्तिप्रतिष्ठासहभूतेति** । कस्मिन्नुत्क्रान्त इत्यादेः किमुत्क्रान्त्यधीना मदुत्क्रान्तिरित्यादिर्नार्थः । अपि तु, अहमुत्क्रान्तो भविष्यामि । तदा मया सह क उत्क्रान्तो भविष्यतीति । मया सह कस्मिन्नुत्क्रान्ते अहमुत्क्रान्तः । कस्य मम च उत्क्रमणकाल एक इति यावत् । येन विना मम शरीराधिष्ठानं न सम्भवति स क इति पर्यालोचयामासेत्युक्तं भवति ।

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् । मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च[1] नाम च ।। ४ ।।**

**स प्राणमसृजतेत्यादि** । सः जीवः एवं पर्यालोच्य प्रथमतः स्वोत्क्रान्ति-प्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठं मुख्यप्राणं सृष्टवान् । तस्मात् श्रद्धां आस्तिक्यबुद्धिं पञ्च महाभूतानि, वागादीन्द्रियं, मनः, व्रीह्यादिरूपमन्नं, तदायत्तं शरीरेन्द्रियसामर्थ्यं, शरीरशोषणादिलक्षणं तपः, ऋग्यजुस्सामादीन् मन्त्रान्, ज्योतिष्टोमादीनि कर्माणि, कर्मफलभूतान् स्वर्गादीन् लोकान्, तेषु लोकेषु स्वर्गादिनामानि सृष्टवानित्यर्थः । यद्यपि षोडशकलास्रष्टृत्वं परमात्मन एव, तथापि तद्धेतुभूतादृष्टारम्भककर्मकर्तृत्वेनायं स्रष्टृत्ववाद इति द्रष्टव्यम् । ततश्च स्वभोगोपकारिकाः षोडशापि कलास्तद्धेतुभूता-दृष्टारम्भककर्माणि कृत्वा सृष्टवान् । अतस्तद्भोक्तृतया षोडशकलत्वं जीवस्येति यावत्[2] ।। ४ ।।

स प्राणमिति तच्छब्दः ईक्षितवन्तं पुरुषं परामृशति । तथा ईक्षितवान् पुरुषः प्राणमसृजतेत्यर्थो भवति । इममर्थं भङ्गचन्तरेणाह—**एवं पर्यालोच्येति** । **तदायत्तमिति** । प्राणात् अन्नान्तमसृजत । वीर्यादिकं तु अन्नादसृजतेति नात्र योजना कार्या । अपि तु एतदपि प्राणादेवेति भावः । **मन्त्रानिति** । वायुः आपः पृथिवी मन्त्राः लोकाः, इति सर्वत्र व्यत्ययेन द्वितीयार्थे प्रथमेति भावः । ननु प्राणात् श्रद्धादिसृष्टिरिति बाधितमेतत् । न हि प्राण एषां

1. प्र. वर्जं अन्यत्र 'च' नास्ति । 2. ना. 'जीवस्योपपाद्य' इति दृश्यते । इदमुत्तरावतारिकया एकवाक्यतां याति ।

घटादीनां मृदिव उपादानं भवति, येन तत एषां सृष्टिः स्यात्। सत्यम्। इदं त्विह बोध्यम्। प्राणादनन्तरप्रधानभूता श्रद्धा। तदभावे जीवतोऽपि पुरुषस्य यस्य कस्यापि कार्यस्यानिर्वृत्तेः। तस्मात् प्राणतः श्रद्धासृष्टिरुच्यते। अत्र तु उक्तरीत्याऽनुपपत्तिशङ्का जायेत कथं प्राणात् श्रद्धासृष्टिरिति। एतत्परिहाराय तात्पर्यं विवरीतुमुपरि खादि मनोन्तमुच्यते। अयमत्र परिहारः। प्राणसृष्टिर्नाम पञ्चभूतात्मकं शरीरमुत्पाद्य तत्र चक्षुरादिभिरिन्द्रियैर्मनसा च सह तस्य पञ्चवृत्तितयाऽवस्थापनमेव। एवमवस्थापितः सः सर्वश्रेयःप्राप्तिसाधनशरीरधारणोपयुक्ताहारविषयां श्रद्धां जनयति। इत्थं प्राणात् श्रद्धासृष्टिरिति। एवं मनोन्तस्य सृष्टिः प्राणसृष्ट्यन्तर्गततया श्रद्धातः पूर्वभाविनी। अन्नादिसृष्टिस्तु पश्चाद्भाविनीति विभागव्यञ्जनायैव अन्नमिति पूर्वोत्तरवत् सकृन्निर्देशमात्रेणानुपरम्य पुनरन्नादिति हेतुतया निर्देश आदृतः। अन्नविरहे हि वीर्यादिकं न भवेत्। तस्मादन्ने श्रद्धायाः प्रथमप्रवृत्तिः। इदमन्नस्य वीर्यादिहेतुत्वं प्राणस्य तद्धेतुत्वं न निवारयति। द्वारहेतुत्वस्य द्वारिहेतुत्वाबाधकत्वादिति चात्रावधेयम्। इदं चेदानीं सुगमं यद् वायुराप इत्यादि नावश्यं द्वितीयान्तमङ्गीकर्तव्यम्। किन्तु खादि नामान्तं सर्वं प्रथमान्तमेव। अन्वयश्चैवम्। प्राणात् श्रद्धामसृजत। कथमिति चेत्—तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्युक्तरीत्या प्रथमं तावदाकाश उत्पद्यते। ततः क्रमेण पृथिव्यन्तानि महाभूतानि। एभिः पञ्चभिर्भूतैरारब्धं शरीरं न परं प्राणेन अपि तु इन्द्रियैर्मनसा च सहितो जीवात्माऽधितिष्ठति। ततः श्रद्धा भवति। एवं श्रद्धां ससर्जेति। एवं नव कला उक्ताः। अथ सप्तोच्यन्ते। ततोऽन्नं भवति। श्रद्धाद्वारा प्राणादित्यर्थतो लभ्यते। अन्नाद् वीर्यं भवति। तपो भवति। मन्त्रा भवन्ति। कर्म भवति। लोका भवन्ति। नाम च भवतीति।

**स्वर्गादिनामानीति**। अत्र नामेति न सर्वं नाम विवक्षितम्। अपि तु कर्मफलभूतस्वर्गादिसम्बन्धिनाममात्रम्। एतद्बोधनायैव लोकेषु चेति पुनर्लोकोपादानमित्यभिप्रायः। ननु जीवात्मनो यच्छरीरारम्भकं यच्च तस्योपकरणं यच्च तत्साध्यं कर्मफलादि तस्य सर्वस्य तत्कलात्वमुपपन्नम्। तत्सम्बन्धित्वात्। स्वर्गादिनाम्नस्तु तत्सम्बन्धविरहात् तत्कलात्वं न युज्यत इति चेन्न। कर्मप्रयोगे उच्चार्यमाणानां मन्त्राणामिव 'स्वर्गसिध्यर्थं अनेन कर्मणा यक्ष्ये' इति सङ्कल्पे अन्यत्र च कीर्त्यमानस्य फलनाम्नः तत्सम्बन्धसत्त्वेन तत्कलात्वोपपत्तेः। नाम चेति चकारः कलान्तरसमुच्चयार्थ इति स्पष्टम्। लोकेषु चेत्यत्र तु चकारः कलापरिगणनसमाप्तिद्योतनार्थः।

**तद्धेतुभूताद्द्रष्टेति**। एतेन "स ईक्षाञ्चक्रे, स प्राणमसृजत" इत्यादिकं जीवात्मनः तादृशसङ्कल्पवत्त्वाद्यारोपेणोक्तमित्यभिप्रायः सूचितः।

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति**

**भिद्येते तासां[1] नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति । तदेष श्लोकः ॥ ५ ॥**

अथ परमात्मन ईदृक्त्वाभावादकलत्वं, तद्द्वारा मुमुक्षुवेद्यत्वञ्चोपपादयति— **स यथेमा नद्य इति** । यथा स्रवन्त्यो गङ्गाद्या नद्यः समुद्रायणाः—अत्र[2] अयनशब्देनाधारत्वमुखेनात्मत्वमुच्यते—समुद्रात्मिकाः,[3] समुद्रापृथक्स्थितिप्रतिपत्तियोग्या भूत्वा[4] समुद्रं प्राप्य अस्तं गच्छन्ति अदर्शनं यान्ति; न तु समुद्रे वृद्ध्यादिलक्षणं विकारमुत्पादयितुं प्रभवन्ति; तासां च गङ्गायमुनादीनां यानि गङ्गायमुनादीनि नामानि[5] यानि च शुक्लकृष्णादिरूपाणि प्राक्तनानि तानि भिद्यन्ते तत्प्रवेशानन्तरं न भवन्ति । नामान्तरं रूपान्तरञ्च भवतीत्यर्थः[6] । तदेव दर्शयति—**समुद्र इत्येवं प्रोच्यत इति** । तत्[7] प्रविष्टं नदीजातं सर्वं समुद्र इत्येव प्रोच्यते, न तु गङ्गायमुनेति । स यथा स दृष्टान्तो यथेत्यर्थः । एवमेव अस्य परिद्रष्टुः अनुभवितुः भोक्तुर्जीवस्य भोगोपकरणभूता इमाः षोडशापि कलाः निरुपाधिकपुरुषशब्दवाच्यं वासुदेवं प्राप्य अस्तं गच्छन्ति । यथा शिलातलं प्राप्य क्षुरधाराः कुण्ठीभवन्ति तथा भोगाधायिका न भवन्तीत्यर्थः । तत्र हेतुमाह—**पुरुषायणा इति** । [8]पुरुषसंकल्पाधीनस्वरूपस्थितिप्रवृत्तिका इत्यर्थः । तासां कलानां जीवविषये भोग्यभोगस्थानभोगोपकरणत्वादिनामरूपभेदवत् परमात्मविषये भोगस्थानत्वादिनामरूपे न स्तः । तदेव दर्शयति—**पुरुष इत्येवमिति** । पुरुषापृक्स्थितिप्रतिपत्तिकतया पुरुष इत्येवं प्रोच्यते, न तु तद्भिन्नत्वेन तद्भोग्यभोगस्थानत्वादिना तत्कला[9] प्रोच्यते । **स एष इति** । तस्मात् परमात्मनः कलाभोक्तृत्वाभावदकल इत्येवोच्यते । अत एवामृतश्च । मरणस्य भोक्तृत्वरूपकलासंबन्धाधीनत्वादिति भावः । **तदेष इति** । तत् परमात्मनः स्वरूपमधिकृत्य वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः ॥ ५ ॥

**ईदृक्त्वाभावादिति** । प्राणाद्यधीनकर्तृत्वभोक्तृत्वाद्यभावादित्यर्थः । तद्द्वारा अकलत्वद्वारा । **मुमुक्ष्विवेति** । षोडशकलपुरुषप्रश्नः न तत्स्वरूपव्युत्पत्तिलाभमात्रोद्देशेन कृतः । अपि तु

1. 'चासां' । 2. ग्र. 'अत्र' नास्ति । 3. ग्र. 'समुद्रात्मिकाः' नास्ति । 4. ना. पू. '... प्रतिपत्तिकाः' 5. ग्र. पू. 'तासां च गङ्गायमुनदीनि नामानि यानि' । 6. पू. तत्प्रवेशानन्तरं न भवन्तीत्यर्थः । ग्र. ना. 'तत्प्रवेशानन्तरं नामान्तरं रूपान्तरं च भवतीत्यर्थः' । 7. ना. पू. 'तत्र' । 8. 'पुरुषाधीन' । 9. पू. 'तत्कलादित्वेन' । ना. '... दिना प्रोच्यते' ।

यद्विषयं ज्ञानं मोक्षसाधनं तन्निश्चयोद्देशेन । अतः षोडशकलपुरुषनिरूपणेऽवसितेऽपि श्रोतुरबुद्धि-निश्चयसम्पत्तये निरूपितषोडशकलपुरुषविलक्षणतया मोक्षसाधनभूतवेदनविषयं वस्तु निरूपयितु-मुपरि आचार्यः प्रवर्तत इति भावः ।

स दृष्टान्त इति । स यथेत्युपक्रमे श्रुतत्वापि तत्रानन्वयात् क्रमभेदेन इह योजना कार्येत्यभिसन्धिः ।

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥**

**अरा इवेति ।** यस्मिन् प्रतिष्ठिताः यदात्मिकाः, यदुपादाना इत्यर्थः । शिष्टं स्पष्टम् । यथावत्[1] तमेव पुरुषं मुमुक्षुवेद्यमवगच्छत । ब्रह्मज्ञानस्य[2] फलमाह—**मा वो मृत्युरिति** । वः ब्रह्मज्ञानां युष्माकं परितो व्यथाः मृत्युर्मा कार्षीदित्यर्थः ॥ ६ ॥

यथेत्यस्य प्रसिद्धमुपमानार्थं अत्रानपेक्षितत्वादुपेक्ष्य उपयुक्तमर्थान्तरमाह—**यथावदिति** । वेद्यमित्येतत् विधेयविशेषणमित्यभिप्रेत्य व्याचष्टे—**मुमुक्षुवेद्यमवगच्छतेति** । विदेत्यर्थे **व्यत्ययेन** वेदेति रूपमिति भावः । मा व इत्यनेन हि बहूनामत्र सम्बोध्यत्वं प्रतीयते । **कार्षीदिति** । अध्याहृतमिदम् ।

अत्रेदं बोध्यम् । स यथेमा नद्य इत्यादिः पूर्वः खण्डः कृत्स्नः जीवपरतयापि शक्यो योजयितुम् । तथा हि । कः षोडशकलः पुरुष इति प्रष्टुरयमाशयः । यद्ययं जीवात्मा, तर्हि स्वाभाविकात् षोडशकलत्वात् अस्य कदापि मोक्षो न भविष्यतीति । तं व्यावर्तयितुमिच्छन् आचार्यः स यथा नद्य इत्यादि वक्तुमुपक्रमते । अस्तं गच्छन्ति स्वरूपं जहति ; मोक्षुर्मोक्षोप-करणतां त्यजन्ति । अत्यन्तनिवृत्ततत्सम्बन्धा भवन्तीति यावत् । कदा ? पुरुषं प्राप्य । तेजः परस्यां देवतायामित्युक्तरीत्या चरमशरीरान्निष्क्रामति जीवे तेन सह परमात्मनि सम्पन्नास्त्वित्य-त्यर्थः । ततः परं हि तासां तज्जीवोपकरणता नास्ति । परमात्मना एकीभूतास्तच्छरीरतया केवलं वर्तन्त इति । एवं सति जीवः कथं भवतीति चेदाह— **स एष इति** । सः पूर्वं षोड-शकलः स्थितः, एषः अद्य परमात्मलीनसर्वकलः जीवः, अकलः कलासम्बन्धरहितः, अत एव अमृतः पुनः संसारगन्धरहितः भवति । तथाच षोडशकलत्वान्मुक्तिर्भवत्येव जीवस्येति भावः । नन्वीदृश्या दशायाः सम्प्रात्यर्थं किं कर्तव्यमित्यत्र श्लोकेन समाधानं वक्तुमिच्छन् तमुपक्षि-पति— **तदेष** इति । परिद्रष्टुः परिदर्शनसाधनभूताः कलाः यत्र अन्ततो लीना भवन्ति स-परमपुरुषः वेद्यः उपास्यः । उपासनेन प्रीतः सः इमां दशां जीवं प्रापयिष्यति । तस्मात् तस्योपास्तिं कुरुत । कलाः सर्वा निवर्त्स्यन्ति । संसारव्यथा पुनर्न भविष्यतीति ।

मूले **परिव्यथा इति** । अयमितिशब्दः प्रतिवचनसमाप्त्यर्थः ।

---

1. ना. 'वेदयथ' । 2. ग्र. 'ब्रह्मज्ञानं फलम्' ।

**तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति ॥ ७ ॥**

**तान् होवाचेति** । तान् सुकेशादीन् षडपि शिष्यान् प्रत्येतदुवाच । अहमेतावदेव परं ब्रह्म जानामि । परब्रह्मविषये ममैतावदेव ज्ञानं इतोऽधिकं नास्तीत्यर्थः ॥ ७ ॥

स्वकृतेषु सर्वेषु प्रश्नेषु समाहितेष्वपि, स्वस्वस्थानगमनाय काले प्राप्तेऽपि, षडपि ते ऋषयः ब्रह्मवेदनतृष्णातिशयेन पुनरपि किं किञ्चिदाचार्यो वक्ष्यतीति प्रत्याशां कुर्वन्तः, विलम्बितप्रस्थानाः, आचार्यं प्रणम्य, तस्याग्रे तूष्णीमतिष्ठन् । तत इङ्गितज्ञ आचार्यस्तानुवाच—**एतावदेवेति** । इदं क्रियाविशेषणम् । तदाह—**एतावदेव ज्ञानमिति** ।

**ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥**

**इति षष्ठः प्रश्नः**

**ते तमर्चयन्त इति** । ते षडपि शिष्याः तं पिप्पलादं त्वमस्माकं संसाराकूपारतीरप्रापकतया पिताऽसि । तस्मात् त्वत्तो जन्मैव श्रेष्ठं जन्म । "स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्मे" ति श्रवणादिति अर्चयन्तः पूजयन्तो बभूवुः । उत्तरशान्तिस्थाने नमः परमऋषिभ्य इति[1] । वाक्याभ्यासः उपनिषत्समास्त्यर्थः । न चैतावदेवाहं परं ब्रह्म वेद नातः परमस्तीति षोडशकलजीवातिरिक्तपरब्रह्मनिषेधः किन्न स्यादिति वाच्यम् । "अधिकन्तु भेदनिर्देशा" दित्यादिभिर्विरोधप्रसंगात् । [2]तत्र हि जीवाभेदात् ब्रह्मणो जगत्कारणत्वे हिताकरणादिदोषमाशंक्य

1. प्र. 'इति वाक्यम् । अभ्यासः' । ना. '...स्थाने इदम् । वाक्याभ्यासः' ।
2. ना. तथाहि । स्मृतिपादे तत्त्वमसि अयमात्मा ब्रह्मेत्यनेन इतरस्य जीवस्यैव ब्रह्मभावव्यपदेशात् सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्य अनन्तदुःखाकरं स्वानर्थावहं जगत् सृजतो जीवरूपस्य ब्रह्मणः आत्मनो हिताकरणाहितकरणादयो दोषाः प्रादुःष्युरिति 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरि' ति सूत्रेण पूर्वपक्षं कृत्वा 'अधिकन्तु भेदनिर्देशात्' 'अश्मादिवच्च तदनुपपत्तिरि' ति द्वाभ्यां सूत्राभ्यां सिद्धान्तितम् । तुशब्दः पूर्वपक्षं व्यावर्तयति । ब्रह्म प्रत्यगात्मनोऽधिकम् भिन्नम् । कुतः । भेदनिर्देशात् । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' 'पृथगात्मानं

जीवभेदाद्दोषाभावःसिद्धान्तितः । तथाहि तदधिकरणभाष्यम्---जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिः 'तत्त्वमसि' 'अयमात्मा ब्रह्मे'त्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यत इत्युक्तम् । तत्रेदञ्चोद्यते---यदीतरस्य जीवस्य ब्रह्मभावोऽमीभिर्वाक्यैर्व्यपदिश्यते, तदा ब्रह्मणःसार्वज्ञ्यसत्यसंकल्पत्वादियुक्तस्यात्मनो हितरूपजगदकरणमहितरूपजगत्करणमित्यादयो दोषाः प्रसज्ज्येरन् । आध्यात्मिकाधिदैविकाधिभौतिकानन्तदुःखाकरञ्चेदं जगत् । न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान् प्रवर्तते । जीवात् ब्रह्मणो भेदवादिन्यः श्रुतयः जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः । भेदे सत्यनन्यत्वासिद्धेः । औपाधिकभेदविषया भेदश्रुतयः स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चेत्, तत्रेदं वक्तव्यम् । स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा न वा । न जानाति चेत् सर्वज्ञत्वहानिः । जानाति चेत् स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति(मेव) जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्या । जीवब्रह्मणोरज्ञानकृतो भेदः ; तद्विषया भेदश्रुतिरिति चेत्, तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलञ्च तदवस्थम् । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न संभवति । अज्ञानेन प्रकाशस्तिरोहितश्चेत् तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात् स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम् । अत इदमसंगतं ब्रह्मणो जगत्कारणत्वमिति "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति" रिति सूत्रेण पूर्वपक्षं प्राप्य सिद्धान्तोऽभिधीयते "अधिकन्तु भेदनिर्देशा" दिति ।

---

प्रेरितारञ्च मत्वा' 'स कारणं करणाधिपाधिपः' 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'प्राज्ञेनात्मना संपरिष्वक्तः' 'प्राज्ञेनात्मना अन्वारूढः' 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'नित्यो नित्यानां चेतनश्चेतनानां' इत्यादिभिर्वाक्यैः भेदनिर्देशात् । किञ्च यथा अश्मलोहादीनां अखिलहेयप्रत्यनीककल्याणैकतानब्रह्मैक्यानुपपत्तिः एवम् 'अखिलहेयास्पदस्य जीवस्य अतादृशेन ब्रह्मणैक्यानुपपत्तिरिति सूत्रद्वयार्थः । एवमधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' 'भेदव्यपदेशाच्चान्यः' 'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'उभयेऽपि हि भेदेनैनमधीयते' इत्यादिन्यायाश्च कुप्येयुरित्यलं प्रपञ्चेन । (इति) षष्ठः प्रश्नः ।

तुशब्दः पक्षं व्यावर्तयति । आध्यात्मिकादिदुःखयोगार्हात् प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म । कुतः ? भेदनिर्देशात् । प्रत्यगात्मनो हि भेदेन निर्दिश्यते परं ब्रह्म "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः, पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति, स कारणं करणाधिपाधिपः, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति, ज्ञाज्ञौ द्वावजावीशनीशौ, प्राज्ञेनात्मना संपरिष्वक्तः, प्राज्ञेनात्मनाऽन्वारूढः, अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः, प्रधानक्षेत्रज्ञपतिर्गुणेशः, नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यादिभिः । "**अश्मादिवच्च तदनुपपत्ति**"रिति । अश्मकाष्ठलोष्ठतृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्यनिर्विकारनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपनानाविधानन्तमहाविभूतिब्रह्मस्वरूपैक्यं यथा नोपपद्यते, तथा चेतनस्याप्यनन्तदुःखयोगार्हस्य खद्योतकल्पस्य "अपहतपाप्मे"त्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगु(णग)णाकरब्रह्मभावानुपपत्तिः । सामानाधिकरण्यनिर्देशः "यस्यात्मा शरीर" मित्यादिश्रुतेर्जीवस्य (पर)ब्रह्मशरीरत्वात् ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेः जीवप्रकार(क)ब्रह्मप्रतिपादनपरश्चैतदविरोधी । प्रत्युतैतस्यार्थस्योपपादकश्चेति "अवस्थितेरिति काशकृत्स्नः" इत्यादिभिरसकृदुपपादितम । अतः सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीरमिति सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम् । तदेव ब्रह्म स्थूलचिदचिद्वस्तुशरीरं जगदाख्यं कार्यमिति जगद्ब्रह्मणोस्सामानाधिकरण्योपपत्तिः । जगतो ब्रह्मकार्यत्वं, ब्रह्मणोऽनन्यत्वं अचिद्वस्तुनो जीवस्य (च), ब्रह्मणश्च परिणामित्वदुःखित्वकल्याणगुणाकरत्वस्वभावासंकरः सर्वश्रुत्यविरोधश्च भवति । "सदेव सोम्येदमग्र आसीदेकमेव" इत्यविभागावस्थायामप्यचिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम् । "वैषम्यनैर्घृण्ये न सापेक्षत्वात्, न कर्माविभागादिति चेन्नानादित्वादुपपद्यते

चाप्युपलभ्यते चे" ति सूत्रद्वयोदितत्वात् तदानीमपि सूक्ष्मरूपेणावस्थानस्य। अविभागस्तु नामरूपविभागाभावादुपपद्यते। अतो ब्रह्मकारणत्वं संभवत्येवेति।

एवं "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्, भेदव्यपदेशाच्चान्यः, सुषुप्त्युत्क्रान्त्योर्भेदेन, उभयेऽपि हि भेदेनैनमधीयत" इत्यादिन्याया प्रकुप्येयुरित्यलं प्रपञ्चेन ॥ ८ ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

**इति प्रश्नोपनिषद्भाष्ये षष्ठप्रश्नभाष्यम्।**

---

**इति श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवासमधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु प्रश्नोपनिषत्प्रकाशिका।**

---

**येनोपनिषदां भाष्यं रामानुजमतानुगम्।**
**रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥**

---

आचार्येण तथोक्तास्ते तृप्ता बभूवुः, यावदाचार्यस्य ज्ञानं तत् सर्वमस्मभ्यं दत्तमिति। ततस्ते तं यथार्हमभिपूज्य प्रत्यगच्छन्। तत्र वाचिकपूजाप्रकारो मनाक् प्रदर्श्यते— **त्वं हि न** इति। त्वमेव पिता। तरतमभावपरीक्षायां अन्यस्य पितुः पितृत्वमेव नास्तीति वक्तव्यं भवतीति भावः। पातीति हि पिता। यः शरीरजन्म दत्वा विविधदुःखानुभवं कारयति स कथमस्मान् पातीत्युच्यते। त्वं तु अस्माकं विद्याजन्म दत्तवान्। इतः परं दुःखानुभवकथैव नास्ति। अविच्छिन्ननिरतिशयानन्दानुभवस्तु भविष्यति। एवं त्वं पासि। तस्मात् त्वमेव पितेति।

**तमर्चयन्त** इति । नेदमाख्यातरूपं प्रयुक्तम् । नाप्यन्यत् किमप्याख्यातं प्रयुज्यते । अर्चनस्योपरतिरेव नासीत् । आप्रायणं तदनुवृत्तम । कस्यचित् कार्यस्य करणावसरे अर्चन-मिति न । गच्छन्तः तिष्ठन्तः शयानाः भाषमाणाः सर्वावस्थाः तत्प्रशंसामकुर्वन्नित्यभिप्रायः ।

**योऽस्माकमिति** । अस्मान् तारयसीति न कण्ठतो वक्तव्यम् । 'त्वं हि नः पिता योऽवि-द्यायाः परं पारं तारयसीत्यु'क्ते हि अस्मानिति लभ्यत एव । तस्मात् तदुपेक्षणम् । आचार्य-कृतमुपकारातिशयं व्यञ्जयितुमिच्छन्तस्तु स्वाविद्याया अतिमहत्ताप्रकाशनौपयिकतया तद्विशेषण-तया आत्मानं निर्दिशन्ति **अस्माकमविद्याया** इति । अस्माकमविद्यायाः । नहीदृशी चिरानुवृत्तबहुक्लेशदायिनी अदृष्टपारा अविद्या लोकेऽन्यस्य कस्यचित् । अस्याः परं पारं त्वं तारयसीति ।

इति षष्ठप्रश्नटिप्पणी ।

---

अङ्कागमाङ्केन्दुविदेशवर्षे
प्रश्नस्य भाष्ये विवृतिं व्यतानीत् ।
वृषाद्रिशृङ्गोद्यदुदारचन्द्र-
पदारविन्दप्रवणान्तरात्मा ॥



